SRI VAISHNAVA SAMPRADAYA GRANTHAMALA — No. 7

General Editor :—Prof. J. CHENNA REDDY, M.A., B.Ed.
*Director S. V. O. Institute, Tirupati.*

# Yathiraja Vijaya Natakam

(VEDANTHA VILASAM)

OF

## Sri Ghatikasatam Vatsya Varadacharya

(GHATIKASATAM AMMAL)

**WITH A RARE COMMENTARY "RATNADIPIKA"**

CRITICALLY EDITED WITH NOTES, APPENDICES ETC.

BY

Sahitya, Nyaya Vedanta Siromani Vidwan
Sri T. K. V. N. SUDARSANACHARYA,
*Formerly Editor in charge of Sri Vaishnava Sampradaya Granthamala S. V. O. I., and Head of Dept. of Nyaya in S. V. O. College, Tirupati.*




PUBLISHED
BY
TIRUMALA-TIRUPATI DEVASTHANAMS
TIRUPATI

श्रीवैष्णवसम्प्रदायग्रन्थमाला—सं. ७.

साधारणसम्पादक - श्री. जी. चेन्नारेड्डि, एम, ए. वि, इ, डि.

श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाध्यक्षः, तिरुपति.

वेदान्तविलासापरनामधेयम्

# यतिराजविजयम् – नाटकम्



प्रणेतारः

श्री घटिकाशत ' अम्माळ् " अपरनामधेयाः

श्री वात्स्य – वरदाचार्याः



सम्पादकः

( व्याख्यान - अनुबन्ध - टिप्पण्यादिभिस्साकं )

साहित्य - न्याय - वेदान्तशिरोमणिः

उभयवेदान्तविद्वान्

ति. कु. वें. न. सुदर्शनाचार्यः

श्रीवेङ्कटेश्वरप्राच्यकलाशालायां न्यायशास्त्रप्रधानाचार्यः.

श्री प द पु री

१९५६

# FOREWORD

I have great pleasure in introducing to the public this valuable critical edition of 'Sri Yatirajavijaya' (Vedantavilasa) a philosophical allegorical play written by the welknown Vidvatkavi Vatsya Varadacharya (Ghatikasatam Ammal) of Kancheepuram. An elaborate Introduction, Notes and Appendices etc., are the notable features of the edition added by our learned Vidvan Sri T. K. V. N. Sudarsanacharya Siromani who was the Editor in charge of Standard Religious Texts, and it is published as the 7th in series of Sri Vaishnava Granthamala under the auspices of the Sri Venkatesvara Oriental Institute, Tirupati.

The Editor a versatile scholar brought out this very attractive and valuable edition pooling up all the available information about the text from every accessable source. In his Sanskrit introduction he discussed all the fundamental principles of this drama in its various aspects and tried to present a clear and comparative picture of different schools of religious and philosophical thought as revealed by great and revered Acharyas. He finally established the Visishtadvaita theory of 'Vishnuparamya' aimed at by the author of the play. The ripe arguments of Sri Sudarsanacharya in determining 'Vedamauli' as the chief hero of the play on the basis of 'Sachivayattasidditva' as the result of all the actions of Yatiraja finally go to help realisation of the object in favour of Vedamauli, and in establishing Bhaktirasa as the chief sentiment of the play after examining the position of Vira and Santa sentiments, carefully defining the connotation of Bhaktirasa so as to form an integral part of Sringara without prejudice to the regid precepts of Alankarikas like Dhananjaya and Dhanika in Dasarupaka, afford clear evidence to his critical outlook and deep erudition.

In Sanskrit literature the allegorical plays have occupied a unique place. The elements of allegorical expression are found even in Vedic literature, though they have taken a definite shape in the Mahabharatha and several of the great Puranas. The episode of Puranjanopakhyana in Srimadbhagavatha is an outstanding

example of the type on the model of which a famous allegorical play "Prabodhachandrodaya" was written by Sri krishna Misra. This play is tha source of the entire similar literature in Sanskrit after Sri Krishna Misra.

A style that abounds in intricate and obscure figures of speech, and in thoughts couched in unintelligible phraseology is any day unsuitable for adoption in writing a stage drama intended to provide entertainment to all classes of people. That might be well appreciated after a calm and scholarly reading. The allegorical way of expression is much less suited to a play. But as we see in Sanskrit literature, majority of the plays written by the famous authors are not free from the above defects. Hence the Sanskrit play afforded a laborious study rather than an entertainment on the stage. So the allegorical drama also was equally read and enjoyed by profound scholars with a philosophical bent of mind and gained popularity.

In an allegorical play all the human qualities classed as virtues come in conflict with the opposite set of qualities—the vices—of-course both personified and displayed as characters of the play. In the end the virtue prevails gaining a decisive victory over the vice.

Sri Krishna Misra was an ascetic of the Paramahamsa order. He was the follower of Sri Sankara Bhagavadpadacharya. His Prabodhachandrodaya in six acts defends Advaita Philosophy of Vishnu doctrine combining Vedanta with Vishnuism from the onslaughts of Buddism, Jainism and Sakteyam. As Probodhachandrodaya depicts Monism (अद्वैत), Sankalpasuryodaya of Sri Vedantha Desika and Yatirajavijaya establish qualified Monism (विशिष्टाद्वैत) on the lines propounded by Sri Bhagavad Ramanuja.

The philosophical theme in this type of play is that the Supreme Soul (परमात्मन्) gets encompassed by Illusion (माया) and the Soul (आत्मन्) is depicted in Plurality (संसार) by evil characters like Confusion (मोह), Vanity (दम्भ) and False Conception (मिथ्यादृष्टि)etc., The virtuous characters like Discrimination (विवेक), Spiritual Knowledge (विद्या) and Faith (श्रद्धा) etc., help the struggling Soul (आत्मन्) in obtaining final Emancipation (मोक्ष) when Knowledge (प्रबोध) dawns on him. In the end Trust (भक्ति) in Vishnu applauds the result. This is how Sri Krishna Misra presents the doctrine of Advaita.

Sri Venkatanatha in his Sankalpasuryodaya adopted the same form of play as of Sri Krishna Misra. But the content and manner of treatment of the subject matter are different. His main mission was to interpret the philosophical doctrines in conformity with those of Bhagavad Ramanuja. The religious fervour and the long and prosaic prologue have made the play less popular among the scholars of non-Vaishnavaite sects. The style of Prabodhachandrodaya is lucid and simple.

Yatirajavijaya of Vatsya Varadacharya occupies an exemplary place in Sanskrit philosophical literature. The conflict here is not between two sets of human qualities, but it is between the Visishtadvaita school of thought on one side and all other schools of thought on the other and the above mentioned qualities have merely played a secondary roll. The author appears to have a thorough insight into all the Darsanas in circulation at that time and also the interpretations of the Acharyas of all the sects. Arguments and counter arguments of a very high order are advanced and eventually the doctrine of qualified Monism as preached by Bhagavad Ramanuja is established after proving that all other schools have no sustaining essence in them.

Tirupati.
20—10—'56

J. CHENNA REDDY
*Director.*

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

# प्रस्तावना

आङ्गिकं भुवनं यस्य वाचिकं वेदवाङ्मयम् ।
दशरूपधरं देवं श्रीनिधिं तमुपास्महे ॥

अखिलभुवनजन्मस्थेमभङ्गादिलीलस्य विनतविविधभूतव्रातरक्षैकदीक्षस्य श्रुतिशिरसि विदीप्तस्य हेयप्रत्यनीकासंख्याककल्याणगुणगणाकरस्य परस्य ब्रह्मणः पुरुषोत्तमस्य श्रीनिवासस्य परमतत्त्वप्रकाशकं वेदान्तविलासापरनामधेयं मृदुमधुरमञ्जुलं यतिराजविजयनाटकमिदं—श्रीमत् श्रीवेङ्कटेश्वरप्राच्यविद्यापरिशोधनालयग्रथितायां श्री श्रीवैष्णवसम्प्रदायग्रन्थमालायां सप्तमं प्रसूनम् ।

ललितोचितसन्निवेशरम्यया काव्यसरण्या, तत्रापि, आबालसुलभया दृश्यरूपकपद्धत्या च महाप्राज्ञानामपि दुरूहान् श्रुतिशुद्धान्तरहस्यभूतान् वेदान्तसिद्धान्तान् परमपामराणामपि करतलामलकयति नाटकमिदमिति महदिदं प्रमोदस्थानम् ।

## धर्मप्रबोधने नाटकानां स्थानम्

विदितचरमेव हीदं सर्वेषामपि विपश्चिदपश्चिमानां यत्, शब्दप्रधानेभ्यः प्रभुसम्मितेभ्यो वेदेभ्यः, अर्थप्रधानेभ्यो मित्रसम्मितेभ्यश्च पुराणेभ्य, ललितलुलितया विलासप्रक्रियया सर्वेषामपि प्राणिनां निसर्गसम्यञ्चि मनांसि रञ्जयन्ती व्यङ्ग्यप्रधाना कान्तासम्मिता च काव्यश्रीः—कर्तव्येषु सत्सु कार्येषु प्रवर्तयति, निवर्तयति च अकर्तव्येभ्योऽसत्कार्येभ्यः सर्वानपि जनानिति । तत्रापि पण्डितास्वादनैकविषयेभ्यः श्रव्यकाव्येभ्यः, निपुणनटचेष्टया समुत्तम्भितानि सकलप्राणिहृदयङ्गमानि दृश्यकाव्यानि चारुतमानि । अत एव "काव्येषु नाटकं रम्यम्", "नाटकान्तं कवित्वम्" इत्यादयो महतां श्रीसूक्तयो बह्व्यो विराजन्ते ।

वेद - स्मृति - पुराण - इतिहासादिष्विव भारतीयेषु काव्यनाटकादिष्वपि धर्मप्रबोधनमेव प्रधानं कृत्यम् । तथासति सुभगरमणीयया सरण्या आध्यात्मिकपरम-

तत्त्वप्रबोधकं नाटकमिदं धर्मप्रबोधनस्य परां कोटिमाटीकत इति, यथावस्थितं अतिरोहितं च तत्त्वमिदम् ।

## आध्यात्मिकनाटकानि (Allegorical Plays)

भारतीयनाटकप्रक्रिया चेयमनादिनिधना, ऋग्वेदीय - यमयमीसंवादमारभ्य प्रवर्तते । एवमियमाध्यात्मिकनाटकप्रक्रियापि समुल्लसति भृशमनादिसिद्धतयैव । जन्तुषु, पुरुषस्य स्वभावगुणादिषु च मनुष्यत्वमारोप्य तानि वस्तूनि पात्रीकृत्य ग्रथितानि नाटकानि — आध्यात्मिकनाटकानि । एतेषां अङ्ग्लभाषायां (Allegorical Plays) इति व्यवहारः । तानीमानि नाटकानि वेदकालमारभ्यैव प्रसिद्धानि वर्तन्ते । वाङ्मनः - प्राण – इन्द्रियादीनां सम्भाषण - विवादादिकं वेदे समुपवर्ण्यते ।

तद्यथा —

“अहं भद्कारं वाक्यं मनश्चार्तीयिताम् । अहं देवेभ्यो हव्यं वहामीति वागब्रवीत्, अहं देवेभ्य इति मनः । तौ प्रजापतिं प्रश्नमैताम् । सोऽब्रवीत् प्रजापतिर्दूतीरिव त्वं मनसोऽसि । यद्धि मनसा ध्यायति, तद्वाचा वदति, तद्भद्रः तुभ्यम् । न वाचा जुहुवन्नित्यब्रवीत् । तस्मान्मनसा प्रजापतये जुह्वति ” इति कृष्णयजुर्वेदे (११-५-११ ४)

बृहदारण्यकोपनिषदि च इयं कथा समुपवर्ण्यते —

“ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः । तद्धोचुः, को नो वसिष्ठ इति । तद्धोवाच । यस्मिन् व उत्क्रान्त इदं शरीरं पापीयो मन्यते, स वो वसिष्ठ इति ॥ ७ ॥

वाग्घोच्चक्राम, सा संवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचुः यथाकला., अवदन्तो वाचा, प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, विद्वांसो मनसा, प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह वाक् ॥ ८ ॥

चक्षुर्होच्चक्राम, तत्संवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचुर्यथान्धाः । अपश्यन्तश्चक्षुषा, प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तः श्रोत्रेण,

विद्वांसो मनसा, प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश चक्षुः ॥ ९ ॥

श्रोत्रं होच्चक्राम, तत्संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथाबधिराः, अशृण्वन्तः श्रोत्रेण, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, विद्वांसो मनसा, प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम, तत्संवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचुर्यथामुग्धाः, अविद्वांसो मनसा, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचुर्यथा क्लीबाः । अप्रजायमाना रेतसा, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, विद्वांसो मनसा एवमजीविष्मेति । प्रविवेश रेतः ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैन्धवः पड्वीशशङ्कून् संवृहेदेवं हैवेमान् प्राणान् संववर्ह । ते होचुर्मा भगव उत्क्रामीः, नैव शक्ष्यामस्त्वदृते जीवितुमिति । तस्योमेबलिं कुरुतेति तथेति ॥ १३ ॥

सा ह वागुवाच, यद्वा अहं वसिष्ठास्मि, त्वं तद्वसिष्ठोऽसीति । यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुः । यद्वा अहं संपदस्मि त्वं तत्संपदसीति श्रोत्रम् । यद्वा अहमायतनमस्मि, त्वं तदायतमसीति मनः । यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतः " ॥ १४ ॥ " इति ।

पञ्चतन्त्रादिकथासु मृगा मनुष्यत्वेनारोपिता मनुष्यवद्व्यवहारपथे स्थापिताः । अश्वघोषस्य शारिकापुत्रप्रकरणेऽपि, बुद्धिः, कीर्तिः, धृतिः — इत्यादयो मनुष्यत्वेन रूपिता व्यवहारपदे व्यवस्थापिताः । अन्ते च बुद्धः साक्षात्करोति । इमां प्रक्रियां स्वीचक्रे कविकर्णपूरः स्वकीये चैतन्यचन्द्रोदये । तत्र चैतन्यमेव धत्ते बुद्धस्य भूमिकाम् । एतदादर्शीकृत्य तदनन्तरकालिका अनेके कवितल्लजाः आध्यात्मिककाव्यानि प्रजानां सुलभसुभगप्रबोधनाय विचरयामासुः ।

## प्रबोधचन्द्रोदयः – तस्य वैशिष्ट्यं च

एवं प्रवृत्तेषु आध्यात्मिकनाटकेषु श्रीकृष्णमिश्रयतिप्रणीतं प्रबोधचन्द्रोदयं नाम नाटकम् प्रधानस्थानमलङ्करोति ।

तत्रभवान् महाप्राज्ञः वश्यवाक् च श्रीकृष्णमिश्रयतिः, अत्यद्भुतावहेण सन्दर्भक्रमेण प्रसन्नगम्भीरं नाटकमिदं, इतरमतनिरसनपूर्वकं विष्णुपारम्यवाद्यद्वैति-सिद्धान्तव्यवस्थापनाय विरचयामास; आवर्जयामास च सर्वेषां दार्शनिकानां दृष्टिं स्वस्वमतस्थापनार्थं एतादृशललितग्रन्थविरचनाय । एवंविध - आध्यात्मिक - परिपक्व-नाटकनिर्माणस्य मार्गदर्शी श्रीमान् कृष्णमिश्रयतिरेवेति अतिरोहितं विमर्शकानाम् ।

“अत्र नायको विवेकः, देव्यौ च मतिः, उपनिषच्च । वस्तुविचारः - सेना-नायकः । तस्य सहायाः— शान्ति - करुणा - श्रद्धा - मैत्री - क्षमा - सन्तोष - वैराग्य - निदिध्यासनादयः । प्रतिनायकः - महामोहः । तस्य सहचारिणी - मिथ्यादृष्टिः । सेनानायकः — कामः; तस्य सहायाः - क्रोध - लोभ - दम्भ - अहंकारादयः । कामस्य रतिः, क्रोधस्य हिंसा, लोभस्य तृष्णा चेति पत्न्यः । चार्वाक - भिक्षु - क्षपणक - कापालिकादयश्च अस्य परिपोषकाः । कामादीनां विवेकादीनां, च पिता मनः ।

महाप्रभावशालिन्या विष्णुभक्तेरनुग्रहे सुसम्पन्ने, वस्तुविचारेण कामे निहते, क्षमया च क्रोध - पारुष्य - हिंसादिषु, निहतेषु सन्तोषेण च लोभ - तृष्णा - दैन्यानृत-पैशुन्यवावस्तेयासत्प्रतिग्रहादिषु, अनसूयया च मात्सर्ये, परोत्कर्षभावनया च मदे निहते, महामोहः योगोपसर्गैः सह निलीनः विवेकस्य महाराजस्य विजयः सुसम्पन्नः ।

ततः पुत्रपौत्रादिव्यसनजनितशोकावेगेन खिन्ने मनसि, तत्सहायेन संकल्पेन, विष्णुभक्तिप्रचोदितया देव्या सरस्वत्या च वैराग्यं तस्य उत्पादितम् । विकारे च शान्ते, हरिं, ब्रह्म वा प्रपन्नम् मनः । निवृत्तिश्च पत्नीत्वेन परिगृहीता । शमदमसन्तोषादिषु पुत्रेषु, यमनियमादिषु अमात्येषु उपचरत्सु, उपनिषद्देवीसहायः विवेकः यौवराज्ये अभि-षिक्तः, देव्याः सरस्वत्या उपदेशेन वृद्धमहाराजेन मनसा । ततश्च विवेकेन उपनिषद्देव्यां प्रबोधचन्द्रः उत्पादितः । पुरुषस्य च परब्रह्मतादात्म्यं “तत्त्वमस्या” दि श्रुतिशिरः-प्रतिपादितं सुसम्पन्नं विष्णुभक्तिप्रसादतः । ततो जीवन्मुक्तिः सम्प्राप्ता ।”

इति परमसुभगया शैल्या स्वसिद्धान्तं पण्डितपामरहृदयङ्गमं समुपवर्णयामास सुप्रतिभावान् सुनिपुणः चतुरपण्डितकविमण्डलशिखामणिश्च श्रीमान् कृष्णमिश्रयतिः प्रबोधचन्द्रोदये । अत्र षडंका विद्यन्ते ।

## संकल्पसूर्योदयः — तस्य वैशिष्ट्यं च

ततः, कविकथककण्ठीरवैः विश्वामित्रगोत्रभूषणैः उल्लोकप्रतिभाप्रभावविनिर्जित-सकलकथकमत्तेभैः श्रीमद्भिः वेदान्ताचार्यैः, एतन्नाटकच्छाययैव स्वसिद्धान्तं व्यवस्थापयितुं अन्वग्राहि, अतिप्रौढसन्दर्भं लोकोत्तरगुणोत्तरं संकल्पसूर्योदयं नाम महानाटकं दशांकपरिकर्मितं सकलसहृदयहृदयपुण्डरीकसमुन्मेषसम्पत्सखम् ।

अत्रेदमैतिह्यमाविरस्ति —

"कदाचन कृष्णमिश्रनामा गौडो महाविद्वान् राढाप्रदेशाच्छ्रीरङ्गनगरमागतो गुरूत्तमैर्विवदमानो वादे च पराजितः, "मदीयः प्रबोधचन्द्रोदयो विलोक्यता" मिति जगाद । "तर्हि, संकल्पसूर्योदयोऽपि श्वो भवद्भिरवलोक्यताम्" इति गुरुभिरपि प्रत्युक्तस्तथेति प्रतिपाद्य निजमुदवसितं प्रति प्रययौ । प्रभाते च सोऽपि रङ्गनाथास्थान-मागतः, चन्द्रोदयं प्रदर्शयन्, संकल्पसूर्योदयाविर्भावविजृम्भणेन विस्मितः, तमाचूलाग्र-मवलोक्य, सर्वात्मना खण्डितप्रायमात्मनो नाटकमभिपद्य गुरूत्तमान् सुबहुशः प्राशं-सत् - इति ।

श्रीमतः कृष्णमिश्रयतेः मायावादितया तन्नाटकनामश्रवणमात्रेण तत्प्रतिपाद्य-सरणिं स्वयमधिगत्य, आत्मनो मतानुसारेण तत्खण्डनरूपं सूर्योदयनामकं नाटकं श्रीमन्तो देशिकोत्तः। एकस्यामेव रात्रावनुजगृहुरिति नेदं किमप्याश्चर्यं यामिनीयामेनैकेनैव पादुकास्तुतिसहस्रप्रणेतॄणां तेषां उल्लोकमहिमानमधितस्थुषां विदुषाम्" इति च ।

श्रीमतः कृष्णमिश्रयतेः प्रबोधचन्द्रोदयमवलोक्यैव समुचितखण्डनात्मकं संकल्प-सूर्योदयनामकं नाटकं रचयामासुस्तत्रभवन्तो वेदान्ताचार्या इति अभ्युगमेऽपि, न कोऽपि दोषः । सर्वथा च संकल्पसूर्योदयः प्रबोधचन्द्रोदयमतिशेते नितरां सर्वतोऽपीति निस्संशयोऽयं विषयः ।

## यतिराजविजयम् — श्रीवरदाचार्याः ।

एवं स्थिते अतिप्रौढसन्दर्भं अतिविपुलं तन्महानाटकमिति समालोच्य, सायन्तनसमयसमुल्लासितमालतीमकरन्दपरिमलमुचि सहृदयजनहृदयानन्दसिरावेधिनि सारस्वतपरमसीम्नि नाटकमहिम्नि समधिष्ठितपदः, श्रीभगवद्रामानुमुनेः पूर्वाश्रमभागिनेयस्य श्रीवत्सकुलचूडामणेः अखिलपरदर्शनमदकर्शनस्य सुदर्शनापरनामधेयस्य वरदविष्ण्वार्यस्य पौत्राणां वेदान्तकूटस्थानां सर्वत प्रथित — श्रीमच्छ्रुतप्रकाशिकाचार्यादिसच्छिष्यवर्गाणां श्रीमतां वरदाचार्याणां पञ्चमः, प्रपञ्चविदितवैदुष्यः काञ्चीपुरीवास्तव्यः श्रीघटिकाशतसुदर्शनाचार्यसूनुः श्रीवेदान्ताचार्य - रामानुजाचार्ययोर्दर्शनस्थापनाचार्ययोः प्रसादभूमिर्वरदाचार्यनामा महाकविः — वेदान्तविलासापरनामधेयं इदं श्रीयतिराजविजयनाटकं मृदुमधुरमङ्गलमञ्जुलेन सन्दर्भेण विरचयामास । अत्रापि प्रबोधचन्द्रोदय इव षडेव अंकाः समुल्लसन्ति ।

चार्वाक - बौद्धादिसहायेन मायावादेन मुख्यमन्त्रिणा मिथ्यादृष्टिवेश्यासंसर्गेण प्रतारितं वेदमौलिं (वेदान्तं) राजानं, तत्सखायेन भगवता श्रीमद्यामुनाचार्येण प्रचोदितः श्रीमान् यतिराजः श्रीभगवद्रामानुजमुनिः, तान् सर्वानपि निर्जित्य प्रतिपक्षिणः, सुनीतिसहचारिणीं सुमतिं विष्णुभक्तिस्वरूपां पट्टमहिषीं राज्ञा च सङ्गमयन् , तं च परब्रह्मानुभवास्वदानन्दैकसाम्राज्ये अभिषिञ्चति — इत्यलौकिकेऽस्मिन्नाटकेऽयं वर्णयति कविसार्वभौमः ।

वेदमौळिः—राजा। सुमतिः (विष्णुभक्तिः) - देवी। मायावादः - महामन्त्री ; भास्करयादवादयश्च - अन्ये मन्त्रिणः । चार्वाक - बौद्धादयः - मायावादसहायाः। मिथ्यादृष्टिः - वेश्या । तस्याः संसर्गप्रलोभेन स्ववशमानीय वेदान्तं राजानं मोहयति मायावादः । तमिमं वृत्तान्तमभिज्ञाय दुर्मन्त्रीन् शासयितुं, तं वेदमौलिं समुद्धर्तुं च श्रीमन्तो भगवद्यामुनमुनयः श्रीमद्रामानुजमुनिं नियोजयामासुः। निस्सङ्गोऽपि स यतिराजो, वेदान्तसंरक्षणैकबद्धदीक्षः, मूलमन्त्रिपदमभ्युपगम्य रङ्गप्रिय-प्रियरङ्गनामभाग्भ्यां श्रीवाधूलदाशरथि-वात्स्यसुदर्शनाभ्यां वैतालिकवेषधारिभ्यां प्रबोधिते राजानि, कुदृष्टिमन्त्रिमतनिरसनेन तत्त्वख्यापनेन च वेदान्तं संरक्षयामास । सद्गुहः - सेनानायकः ; इतिहासपुराणवेदविचारादयः तत्सहायाः ।

## उल्लोके नाटकेऽस्मिन् केचन रमणीयाः प्रघट्टाः

वेदान्तस्य राज्ञः प्रभावमेवं वर्णयति कविः सूत्रधारमुखतः—

" त्रिभुवनमहनीयस्तेजसामेकराशिः
निजनिजमतिसिद्धं निह्नुवानं प्रपञ्चम् ।
परिमुषितविवेकं स्फारयत्यन्धकारं
विघटयति मयूखैः वेदरूपो विवस्वान् ॥ " इति ।

नारदमुखतश्च —

" [1]सर्वस्यापि हितं ब्रवीति समयाचारान् करोति स्थिरान्
मायाजीवपरानयं न सहते मानप्रतापोन्नतः ।
सम्मान्यस्सकलासु नीतिषु महासत्त्वः स्थिराङ्गो युवा
तस्मान्नेतृषु वेदमौलिसदृशो नान्योऽस्ति कश्चिन्नृपः ॥ " इति च ।

राज्ञश्च यतिराजप्रभावतः साम्राज्यलाभश्चैवं समुपवर्ण्यते—

" सर्वैर्विलुप्तविषयः सचिवैः पुरस्तात्
सम्यग्विचिन्त्य सचिवेन यतीश्वरेण ।
सम्प्रापितः स्वपदवैभवमद्वितीयं
सम्राडसौ खलु भविष्यति वेदमौलिः ॥ " इति ।

---

### व्याख्यानविशेषाः ।

1. वेदान्तस्य नायकधर्मा उच्यन्ते—**सर्वस्येति** । **हितं** - पुरुषार्थोपायम् , समयाचारान् - दर्शनधर्मान् । मायाकल्पितौ जीवपरौ येषां तान् ; मायया - कपटेन, आजीवः - जीवनम् । मानेषु - प्रमाणेषु ; मानः - चित्तसमुन्नतिः, प्रतापः - प्रसिद्धिः । मानेन प्रतापेन च । नीतिषु । उपक्रम - उपसंहारादिन्यायविशेषेषु राजनीतिषु । गुणान्तराभ्यामनभिभूतसत्त्वगुणो महासत्त्वः ; महाबलश्च । **स्थिराङ्गः** । अङ्गं — व्याकरणादि । युवा - मनोहरः । सत्त्वशब्देन तत्कार्यं ज्ञानं लक्ष्यते । " नॄन् - पुरुषान् , मोक्षप्रदानेन पा " तीति नृपः । समयाचाराः - देशकुलधर्माचाराः । एवं सर्वत्र शब्दतः, अर्थतः, तात्पर्यतश्च वेदान्तपरत्वं ऊहनीयम् ।

" पौलस्त्येन यथा पुरा रघुपतिर्मायाविना वञ्चितः
भूयस्तं विनिहत्य [1]शङ्करगिरिस्फूर्जत्प्रतापोन्नतम् ।
स्वामी नः श्रुतिमौलिरेष विजयी रामानुजस्यौजसा
साम्राज्यं भरतादिभोग्यविभवं सत्यं तथा धास्यति ॥ " इति च ॥

नाटकस्यास्य यतिराजविजयनाम्नः समर्थनं च अतिचमत्कारतया क्रियते —

" चित्रकूटतटे रामः चित्रसानौ चकार यत् ।
सीताल्ललाटे तन्नामस्वरसंसिद्धमेव तत् ॥ " इति,

ललाटे कृतं हरितालतिलकमेव ; तस्य स्वरैः यतिराजविजयमिति सिद्धमेव तन्नाम — इति प्रहेलिकया ।

माधवसमयस्य ( वसन्तर्तो , श्रीवैष्णवसिद्धान्तस्य च ) समृद्धिरतिविशिष्टेन क्रमेणोपवर्ण्यते सूत्रधारमुखेन । यथा —

" [2]सरल वकुलाभिरामः श्रुतिमधुनिष्यन्दिशुकमुखालापः ।
वहति हरितत्त्वमुच्चैः शाखाकोटिषु महागमस्तोमः ॥ " इति,

" [3]सुरभि सुमनःप्रबन्धाः श्रुतिसुखपरपुष्टषट्पदालापाः ।
माधवसमयविलासा मदयन्ति मनांसि किं पुनस्सुदृशाम् ॥ " इति च ॥

---

1. शङ्करगिरि - शङ्करनाम्ने गीर्वाणवाणी सरस्वती । शङ्करगिरिः - कैलासः । रामानुजः - यतिराजः, लक्ष्मणश्च । ओजः - बलम् । भरतादयः - ब्रह्मविदः, भरतशत्रुघ्नादयश्च । सत्यं - साम्राज्यं विषयम्, न तु असदिति भाव ।

2. वकुलाभिरामशब्देन शठकोपो लक्ष्यते । श्रुतिः - वेदसारः । शुकमुखाः - ब्रह्मविदः । हरिरेव तत्त्वं - हरितत्त्वम् । तत्त्वान्तराणां तत्त्वाविशेषणत्वात् । उच्चैः - सर्वस्मात्परम् । शाखाकोटिषु - काण्वमाध्यन्दिनाद्युपनिषत्सु । महानागमसमूहः । आगमाः - वृक्षाः । सरलवकुलाः — वृक्षविशेषाः । हरितत्त्वं - श्यामत्वं च ।

3. सुमनसः - विद्वांसः, पुष्पाणि च । प्रबन्धाः — ग्रन्था, सन्ततयश्च । श्रुतिसुखपरैः पूर्वाचार्यैः, पुष्टाः - पोषिताः । षट्पदालापाः - शरणागतिमन्त्रा । सुदृशाम् - सुधियाम्, स्त्रीणां च ।

पुनश्च श्रीमद्यतिराजमुखतो माधवसमयं (अभिजिन्मुहूर्तम्, श्रीवैष्णव सिद्धान्तं च) मृदुमधुरस्वनं वर्णयन्ति —

"[1]सुखशीतलाः समीराः श्रुतिमधुरा बालकोकिलालापाः ।
तरवोऽपि पुष्पसुभगाः, माधवसमयो न कस्य बहुमान्यः ॥" इति,

धर्ममुखतश्च —

सर्वङ्कषप्रतापा खल्वियं वैष्णवी वेला, यदिदानीम् —

"कुदृष्टिभिः शिवोलूकमूखैः श्रुतिकटूक्तिभिः ।
तेजसा दुर्निरीक्ष्योऽयं वैष्णवः समयोऽभिजित् ॥" इति च ।

आदित्यज्योतिरपि, परमव्योम — क्षीरसागरादिवत् परमपुरुषस्य विशेषसन्निधानस्थानमिति "उद्वयं तमसस्परि" इत्यादिश्रुतिसिद्धं स्मारयन् वर्णयति ; यथा —

"जगच्चक्षुरिदं ज्योतिरनञ्जनमनामयम् ।
वैष्णवैरेव तेजोभिः वर्धते दीप्ततारकम् ॥

"[2]उन्नामधेयमुत्फुल्लपुण्डरीकविलोचनम् ।
पश्यन्ति हि परं ज्योतिः केचिदत्र हिरण्मयम् ॥" इति ।

---

1. श्लोकद्वयेन माधवसमयः प्रच्यते । वेला कालो, मर्यादा च । कुदृष्टिभिः - वेदस्य अन्यथार्थवादिभिः । शिवो - रुद्रः, शिवागमप्रणेता । उलूकः - वैशेषिकप्रणेता । श्रुतिकटूक्तिभिः - वेदविरुद्धवाक्यैः । "अभितो जय" तीति अभिजित् । अन्यत्र, शिवो गोमायुः, उलूकादयो दिवान्धाः, अभिजिन्मुहूर्तो वैष्णवः । मध्यमेन तेजसा ।

2. य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, तस्य कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम" इति अन्तरादित्यविद्याप्रकाशनमाह — उन्नामेति ।

इदमाम्नायते छान्दोग्ये — (१-६-६) य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद, तस्यर्क् साम च गेष्णौ — इत्यधिदैवतम् । अथाध्यात्ममपि, अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क् तत्साम तदुक्थ्यं तद्यजुस्तद्ब्रह्म, तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ, तौ गेष्णौ, यन्नाम तन्नाम - इति ।

धर्मरक्षणार्थं श्रीमद्यतिराजस्य प्रतिज्ञामपि वर्णयति, एवम् —

" [1]निशातनिस्त्रिंशकठोरधारैर्विलङ्घ्य वेदप्रतिकूलमूहैः ।
महोत्सवो विष्णुपदाश्रितानां मया विधेयो महतां द्विजानाम् ॥" इति ॥

## इतरेषां मतानां निरूपणप्रक्रिया

मतानां चार्वाकादीनां तत्त्ववर्णनमपि नितरां सहृदयविद्वन्मानसराजहंसान् रञ्जयति । यथा हि —

[2]भुङ्क्ते वेत्ति च देह एव सुमहाभूतानि तेष्वेव धीः
किण्वादौ मदशक्तिवत् क्रतुफलं भोक्ता न कोऽपि स्थितः ।
दग्धः किं पुनरभ्युपैति नियमो न क्वापि जीवेत्सुखम्
यावज्जीवति जीवितं नरपतिः न्यायो बलं केवलम् ॥

इति चार्वाकमतम् ; चिन्मात्रमावयोस्तत्त्वं मिथ्यैवाऽऽविद्यकं जगत् ।
तत्तु मित्रस्य मे नित्यं चिन्मात्रं क्षणिकं मम ॥

इति योगाचार मायावादमते ;

यद्वैभाषिकभाषितं यदपि वा सौत्रान्तिकैः सूत्रितम्
योगाचारविचारणा च सरणिः सिद्धान्तसौधस्य नः ।
तज्ज्ञानं च मृषैव विश्ववदिति व्यक्तं ब्रुवन्निर्भयो
मत्पार्श्वे भव नान्यथा तव गतिर्विश्वापलापार्थिनः ॥

---

1. ऊहैः - तर्कैः । कठोरधारैः - कठोरमार्गैः । द्विजाः - विप्राः, पक्षिणः - मांसभुजः ।

2. पञ्चभूतात्मके देहे ज्ञानमुत्पद्यते पाकविशेषात् किण्वादौ मदशक्तिवत् । किण्वम् - सुराद्रव्यम् । भक्ष्याभक्ष्ये, गम्यागम्ये इत्यादिनियमो नास्ति । देह एव आत्मा । अर्थकामौ पुरुषार्थौ । नास्ति परलोकः । बुद्धिसामर्थ्यरहितस्य जीवनोपायो धर्मः — इति हि लोकायतम् ।

वासांसि स्वर्गः, स्त्रियः स्वर्गः - इति कबन्धमीमांसकाः (वेदोत्तरभागस्य प्रामाण्यानङ्गीकारात् पूर्वमीमांसकाः कबन्धमीमांसका इति व्यवह्रियन्ते) । विध्यर्थवादमन्त्ररूपेण त्रिविधो वेदः । तत्र मन्त्रार्थवादेषु हि देवता - तल्लोक - सर्वेश्वरादिसिद्धिः ।

विश्वोऽविद्याकल्पितः ; ज्ञानमेव सत्यम् - इति बौद्धमार्गः । वेदान्तप्रतिपाद्यं सर्वं असत् ; विज्ञानमेव सत्यम् ; एतच्च विज्ञानं वेदान्तविषयम् - इति राहुमीमांसकाः (वेदपूर्वभागस्य प्रमाण्यानङ्गीकारात् अद्वैतिनः राहुमीमांसका इत्युच्यन्ते) ॥

इति माध्यमिकमतम् ;

शब्दैकशेषवपुषस्सकलाश्च वेदाः
विश्वं निरीश्वरमिदं न परे च लोकाः ।
कर्मैव सर्वफलदं कृषिवन्नराणाम्
इत्यादि चिन्तयति वेदविचार एषः ॥

इति मीमांसकमतम् ;

तत्त्वमसीति ब्रुवती श्रुतिरेव श्वेतुकेतुमुद्दिश्य ।
परजीवयोरभेदं ब्रुवतस्ते भवति विक्रमपताका ॥

[1]ब्रह्मास्त्रमेकमादाय समितौ विहरन्नहम् ।
खण्डयामि जगत्सर्वं पाण्डित्यं मम दृश्यताम् ॥

[2]यस्मिन्नध्यस्तमेतत् त्रिभुवनमखिलं यश्च पश्यत्यविद्या-
मुग्धं स्वाध्यस्तमेतद्यदपि निजवपुर्वीक्षणे मुच्यते यत् ।

---

1. समितिः - सभा, युद्धं च । ब्रह्मैव अस्त्रं - ब्रह्मास्त्रम् ; ब्रह्मणोऽस्त्रं चेति । ब्रह्मण्य-ध्यस्तं जगत् अधिष्ठानब्रह्मज्ञानेन हि निरस्यम् ; ब्रह्मणोऽस्त्रं च । मिति. - प्रमितिः, तया सह वर्तत इति समितिः - विद्वत्सभा, युद्धं च ।

2. "सर्वं खल्विदं ब्रह्म" त्यादिषु तमः प्रकाशवत् विरुद्धस्वभावयोः जगद्ब्रह्मणोः प्रतीयमानतादात्म्यानुपपत्त्या "चोरः स्थाणुः" इतिवत् बाधार्थं सामानाधिकरण्यमङ्गीकरणीयम् । तत्र "नेह नानास्ति किञ्चन" इत्यादिश्रुतिबलात् चोरवत् जगत् बाध्यम् ; स्थाणुवत् ब्रह्म सत्यम् । निरधिष्ठानभ्रमस्य अनुपपन्नत्वात् अधिष्ठानसत्यत्वमङ्गीकरणीयम्, इत्याह - यस्मिन्निति । अध्यस्तम् - आरोपितम् । यथा शुक्तिकाशकले रजतम् । स्वारोपितजगद्द्रष्टाऽपि स्वयमेवेत्याह— यश्च पश्यतीति । स्वव्यतिरिक्तदर्शने हेतुमाह - अविद्यामुग्धमिति । तस्य कदा अविद्यानिवृत्तिरित्याह - निजेति । "ब्रह्मवेद ब्रह्मैव भव" तीति श्रुतेः । ज्ञानम् - ज्ञानमात्रम्, विज्ञानं ब्रह्मेति श्रुतिवशात् । तच्च अविद्याकल्पित-कर्म-कर्तृ-करणरूपरहितमित्याह - ज्ञेयादिति । "यत्तद्दृश्यमग्राह्यम्" इति श्रुत्या न वेद्यमित्याह अपदं संविदामिति । "निर्गुणं निष्क्रियं शान्तम्, एकमेवाद्वितीयम्" इत्यादिभिः निर्गुणमित्याह - निर्विशेषमिति । "सदेव सौम्येदमग्र आसीत्", "तत्सत्यम्", सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिसिद्धं दर्शयति - सत्यं तदिति । विवादपदं प्रपञ्चो मिथ्या, दृश्यत्वात्, शुक्तिकारजतवत् । "मृत्युमाप्नोति" "य इह नानेव पश्यति", "नेह नानास्ति किञ्चन" इति प्रमाणबलं दर्शयति - मिथ्या तदितरदिति । उक्तार्थं द्रढयति - कोऽन्यथेति । विस्तरस्तु शास्त्रे द्रष्टव्यः । इदमर्थसप्तकं हि शास्त्रप्रतिपाद्यम् ।

ज्ञानं ज्ञेयादिहीनं भवति यदपदं संविदां निर्विशेषं
सत्यं तद्ब्रह्म, मिथ्या तदितरदखिलं कोऽन्यथा वक्तुमीशः ॥

इति **मायावादिमतम्** ;

[1]ब्रह्मैकं तत्त्वमेतद्बहुविधचिदचित्तन्नियन्तृप्रभेदात्
तत्तच्छक्तिस्वरूपं परिणमति यथा वारिफेनादिरूपम् ।
सत्त्वं सर्वानुवृत्तं मणिषु परिमलन्यायतोऽचित्पदार्थे
चैतन्यं त्वप्रकाशं श्रुतिरिह विषये स्थापिता यादवेन ॥

इति **यादवप्रकाशमतम्** ;

ब्रह्मैकं सदुपाधिभेदभिदुरं जीवत्वमभ्येति तत्
जीवत्वे च विपत्तयोऽनुपहितं ब्रह्मैव शास्त्रं शिवम् ।
ब्रह्मैक्यं खलु मुक्तिरेतदखिलोपाधिक्षये देहिनाम्
कर्मज्ञानसमुच्चयादिधर्मिनि त्वभ्यन्तराज्य स्थितिः ॥

इति **भास्करमतञ्चेति**, तत्तन्मतप्रक्रियाः सम्यक् संगृहीताः ।

## तेषां खण्डनप्रक्रिया

एतेषां मतानां खण्डनप्रकारोऽपि सुभगसुन्दरसन्दर्भेण न्यरूप्येवम् —

"स्ववाग्विरोधस्सत्या चेत् सर्वं शून्यं मृषेति वाक् ।
सर्वं जीवत्यसत्या चेत् मृषा सर्पेऽस्ति किं विषम् ?"

इत्यनेन **बौद्धमायावादमतयोः**,

आकारभेदसम्पाद्यमेतदखिलं निर्विशेषवस्तुवादिनस्ते न सम्भवति ।

---

1. अस्यायमर्थः—सच्चिदानन्दमयं ब्रह्मैव तत्त्वम् । तच्च तत्तच्छक्तिमयं भोक्तृभोग्य नियन्तृरूपेण परिणमति ; यथा फेन - बुद्बुद - तरङ्गरूपेण वारि । कारणभूतं ब्रह्मगुणः - चैतन्यम् ; रत्नगन्धन्यायेन क्वचिदचिद्वस्तुनि विद्यमानमपि न प्रकाशते । कारणात्मना सर्वमभिन्नम् ; कार्यात्मना च सर्वं भिन्नम् , यथा घटशरावादि । भेदाभेदश्रुतयश्च अस्मिन्नर्थे व्यवस्थाप्यन्ते --- इति ।

किञ्च,

नाध्यासः स्वप्रकाशे तिमिरमिव रवौ ज्ञानबाध्या च माया
न ब्रह्म ज्ञानरूपं स्थगयति न ततो बन्धमोक्षौ च तस्य ।
न ज्ञानं ज्ञेयहीनं न सदमतिपदं निर्विशेषं न किञ्चित्
सत्यं स्यान्मानसिद्धं जगदपि न यदि स्वोक्तिबाधादयः स्युः ॥

किञ्च

प्रत्यक्षप्रभृतिप्रमाणविदितं सत्यं च भिन्नं जगत्
बाधस्तस्य न केनचित् स्वविहतेर्ब्रह्मात्मकं तज्जगत् ।
द्वैताद्वैतगिरो विभिन्नविषया बाधाय नालं मिथः
पश्वालम्भनिषेधवाक्यवदतो विश्वापलापः कुतः ?

इदमित्थमिति ज्ञेयं निर्विशेषमिमिं ब्रुवन् ।
माता वन्ध्या ममेत्यल हन्त लज्जेन किं भवान् ॥"

इत्यादिना मायावादमतस्य,

निर्विकारश्रुतिर्ब्रह्म सविकारं न मृष्यति ।
जीवनित्यत्ववादोऽपि तत्कार्यत्वे प्रकुप्यति ॥

इति यादवमतस्य,

बहुधा जीवरूपेण दुःखयसीति परः पुमान् ।
जल्पन्ती तव जिह्वेयं शतधा किं न शीर्यते ? ॥

इत्यनेन भास्करमतस्य च खण्डनमुपनिबद्धम् ।

## श्रीमद्विशिष्टाद्वैतमतस्य वैशिष्ट्यम्

श्रीमद्विशिष्टाद्वैतस्य श्रीमद्यतिराजमतस्य सामीचीन्यम्, सर्वप्रमाणानुकूलत्वम्, सर्वसिद्धान्तशिरोमणिभूतत्वम्, सर्वप्राणिहृदयङ्गमत्वं च अभिवर्णयति —

यतिराजः — ( शुभनिमित्तं वीक्ष्य, दक्षिणतो दर्शयन्, सहर्षम् )

[1]शुकासितभरद्वाजहारीताः सत्पथे स्थिताः ।
कृष्णपक्षाः कृतोद्योगा द्विजा मे दर्शनप्रियाः ॥

राजा — ( विमृश्य, स्मितं कृत्वा ) महर्षिप्रियमेव यतिराजदर्शनम् ।

सुनीतिः — सम्यगुक्तं देवेन ।

वेदेष्वर्थनिधानानि दृश्यन्ते न हि सन्त्यपि ।
तत्र यद्येन दृश्येत तत्तु तस्यैव दर्शनम् ॥

.... .... .... .... ....

[2]स्वस्वार्थक्षतिरिह न क्वचिच्छ्रुतीनाम्
प्रत्यक्षप्रभृतिरपि प्रमाणवर्गः ।
स्वार्थेषु प्रभवति निस्सपत्नचारी
राजंस्ते वहति धुरं यतीश्वरेऽस्मिन् ॥ इति ।

इतिहासपुराणाभ्यामनुमोदितः वेदविचारोऽपि सम्मान्य एव - इति प्रतिपादयति इतिहासमुखतः —

---

1. अत्र शुकाद्या महर्षयः, कृष्णपक्षाः - कृष्णे भक्तिमन्तः; कृतोद्योगाः - कृतोत्कृष्टतद्ध्यानाः । सत्पथः - सतां ब्रह्मविदां मार्गः । द्विजाः - ब्राह्मणाः । यतिराजदर्शनम् - यतिराजसिद्धान्तः ।

2. स्वस्वार्थेति । अत्रायमभिसन्धिः - उभयमीमांसयोरेकशास्त्रत्वात् , पूर्वमीमांसा त्रैवर्गिकविषया; उत्तरमीमांसा मुमुक्षुविषया । तत्र याश्च श्रुतयो विरुद्धवत् प्रतिभासन्ते; तास्तु विषयभेदात् परस्परं न बाधन्ते । उत्तरमीमांसायां च ब्रह्मणो याः , शरीरगुणकर्मादिवादिन्यः श्रुतयः, ताः, नित्यनिरवद्यकल्याणशरीरगुणकर्मादिविषयाः ; याः, तन्निषेधवादिन्यः, ताः, हेयशरीरविषयाः - इति न तासां परस्परविरोधः । प्रत्यक्षादिप्रमाणान्यपि प्रबलप्रमाणान्तराबाधितस्वविषये प्रभूणि भवन्तीति प्रामाणिकं चिदचिदीश्वरात्मकं जगत् सत्यमेवेति ।

[1]ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥

फलं च तत एव लभन्त इति मद्वचने तिष्ठतस्ते न किञ्चित् कचित् भयमस्ति — इति ।

सुनीतिमुखतश्च —

" देव ! [2]सहस्राधिकरणदृष्टपराक्रमोऽयमर्जुन इव रामानुजमते तिष्ठन्, प्रतिज्ञातवैदिककुलपालनप्रत्यूहकृतान्तविजयो महाभारतरणसमर्थो भवति देवस्य " इति ।

इतिहासपुराणयोरुपबृंहणत्वमेवमुपवर्ण्यते —

त्रिविधचिदचित्तदीश्वर — तल्लीलाभोगमोक्ष — तदुपायाः ।
उपबृंहिता युवाभ्यां उपभुज्यन्ते हि सद्भिरस्यार्थाः ॥ इति ।

भुक्तिमुक्तिसौभाग्यनिकषोपलो यतिराजस्तयोर्वैभव्यमेवं वर्णयति । यथा —

भूतैस्तन्मयदेहमेव पुरुषः पुष्यन्नहं भोगवान्
इत्युन्मज्जति दुःखसिन्धुकुहरे मज्जत्यपि स्वात्मनि ।
शुद्धज्ञानसुखात्मकोऽप्यनुभवं स्तुप्यत्ययं मूढधीः
मांसासृङ्मलमूत्रपूयभरितां भर्त्रीं वरस्त्रीति च ॥

इति, **मुक्तस्य** प्रकारम्,

ध्यायन् सत्यमनन्तमन्तरजडं ब्रह्मारविन्देक्षणम्
निष्क्रम्यास्य सुषुम्नयैव कृपया निर्धूतमायातुषः ।

---

1. अर्थवादसिद्धदेवता - तल्लोकं किञ्चित्कारे तत्तद्देवतान्तर्यामितया व्यवस्थितो विष्णुरेव तैस्तैः कर्मभिराराध्यः तत्तद्देवतामुखेन फलप्रदश्च - इत्याह - ये जयन्तीति ॥

2. सहस्राधिकरणेषु - धर्मनिर्णयस्थानेषु । प्रत्यूहवृत्तान्ताः - प्रतिकूलतर्कसिद्धान्ताः । तेषां विजय एव - महाभारः ; तस्य तरणम् - निर्वहणम् । अन्यत्र, सहस्राधिकेषु रणेषु । रामानुजः - कृष्णः । तन्मतानुसरणेनैव स्वप्रतिज्ञातवैदिकधर्मविघ्नभूतयमविजयः । विजयस्य महाभारतयुद्धस्य च निर्वाहक इत्यर्थः ॥

चिद्वर्गो - बद्ध, मुक्त, नित्यरूपेण त्रिविधः । अचिद्वर्गो - मूलप्रकृतिः, कालः, शुद्धसत्त्वम् — इति त्रिविधः । तयोरीशः—तदीशः । तल्लीला - ईश्वरस्य लीला - जगत्सृष्टिसंहारादिः ।

विष्णोस्तत्पदमेत्य तत्र परमे व्योम्नि स्वयंचित् स्वराट्
भुङ्क्ते तेन विपश्चिता सह महानन्दाननन्तान् बुधः ॥

इति, मुक्तस्य वैभवञ्च उत्कीर्तयति ।

जीवात्मनः स्वरूपबन्धमोक्षादीनां समुपदेष्टा मातापितृसहस्रेभ्योऽपि वत्सलतरो वेदपुरुष एवेति, श्रीमद्यतिराजमुखतः सिद्धान्तयति —

देहाक्षादिविलक्षणोऽणुरजडो नित्योऽहमर्थोऽमल-
ज्ञानानन्दमयोऽप्यतन्मय इव भ्राम्यत्यविद्याऽऽवृतः ।
पञ्चक्लेशविपाकपावकशिखालीढस्य तस्यात्मनो
निर्वाणाय निसर्गसौहृदनिधे ! न्यान्या गतिस्त्वां विना ॥ इति ।

श्रीमतो वेदमौलेश्च मुखतः परमपुरुषस्य परमकारुणिकत्वं जगदुदयविभवलय-लीलादिकत्वं च प्रस्तौति —

यः प्रत्यञ्चि सृजन् पराञ्चि च महाभूतानि रक्षन् हरन्
क्रीडत्यद्भुतदिव्यमङ्गलगुणः श्रीमाननादिः पुमान् ।
सर्वं कर्तुमकर्तुमप्यपरथा कर्तुं समर्थोऽपि सन्
व्याजं किञ्चिदपेक्ष्य रक्षति जगद्विश्वव्यवस्थापकः ॥

किंच,

सत्याशेषजडाजडात्मकजगद्देही "बहुस्या" मिति
स्वेच्छातो बहुधा भवन्नपि न तद्दोषेण लिप्येत सः ।
तत्तच्छब्दधियामयं तदपृथक्सिद्ध्यैव विश्रान्तिभूः
देहात्मादिनयेन येन सुपथा भेदैकवाचो गताः ॥ इति ।

सर्वज्ञाननिधेश्च तस्य करुणाराशेरुपेक्षा कुतः
सर्वेशः किमसौ न शक्ष्यति परित्रातुं तथापि प्रभुः ।
सर्वान् रक्षति यत्कटाक्षकणिकापेक्षी नरानुद्धरन्
संसाराम्बुनिधेः स एव हि गुरुः सर्वोत्तरं दैवतम् ॥

इत्यनेन "गुरुरेव परदैवतम्" इति परमगुह्यतममर्थमपि उन्मीलयति ।

एवम्,

अन्तर्वेदान्तसाम्राज्यं बहिस्साहित्यसौरभम् ।
विदग्धः खलु वेदान्तविलासं भोक्तुमर्हति ॥

इति, व्याख्यानकृद्भिर्वर्णितदिशा कमनीयसुभगसाहित्यसुमनःसौरभं परिषद्वलयेषु परिषिञ्चन्, अप्राकृतवेदान्तपीयूषमधुररससमास्वादसौभाग्यसम्पदमपि तेषु सम्पादयति, सरससुभगकमनीयकोमलवचनरचनाधुरीणः सहृदयचक्रवर्ती विद्वत्तल्लजः कविशिखामणिः अयमिति, धन्ये साहित्य – वेदान्तशास्त्रे, धन्याश्च रसिका विद्वच्छेखराश्चेति महदिदं प्रमोदस्थानम् ।

---

## सर्वेषामपि दर्शनानां स्वरूपसंग्रहः

सर्वेषामपि दर्शनानां संग्रहेण स्वरूपं निरूप्यते —

१. पृथिव्यादिभूतचतुष्टयसङ्घाते चैतन्यमुपजायते । तत्सुखदुःखे स्वर्गनरके । तेषां विश्लेषे चैतन्यमनुविनश्यति । नास्ति परलोकादिः - इति **चार्वाकमतम्** ।

२. **ताथागतेषु, वैभाषिकमतं** तु – परमाणुसङ्घातः प्रत्यक्षदृष्टं च जगत् क्षणिकम् । नास्त्यन्यः आत्मा । तस्मिन् स्थिरत्वबुद्धिः संसारः, क्षणिकत्वबुद्धिर्मोक्षः – इति ।

३. स एव सिद्धान्तः **सौत्रान्तिकस्यापि**; तथाऽप्यनुमानसिद्धं जगदिति अङ्गीकारोतीति विशेषः ।

४. **योगाचारश्च** - ज्ञातृज्ञेयौ भ्रान्तिमूलौ; ज्ञानमेव सत्यम्; तदपि क्षणिकम् - इति,

५. **माध्यमिकाश्च** — प्रमाणप्रमेयप्रमातृजातं सर्वमपि भ्रान्तिसिद्धम्; शून्यमेव तत्त्वम् - इति च आमनन्ति ।

६. **आर्हता अपि** — जगत्सर्वं कार्यकारणरूपेण नित्यानित्य - सत्यासत्य - भिन्नाभिन्नात्मकम् । आत्मानः कर्मानुगुणशरीरपरिमाणपरिमाणाः । अनादी संसारः । मलवारण - आत्मज्ञानादिभिः प्रकृतिविनिर्मोकादूर्ध्वगतिप्राप्तिः - मोक्षः - इति ब्रुवते ।

७. **नैयायिका, वैशेषिकाश्च** - जगदुपादानं परमाणवः ; आनुमानिकेश्वरो निमित्तम् ; अनादिर्ना संसारसरित् । सर्वेश्वरोपासनेन एकविंशतिदुःखध्वंसो मोक्षः - इति निरूपयन्ति ।

८ **पाशुपताश्च** — परमाणव एव जगदुपादानकारणम् । आगमसिद्ध ईश्वरो निमित्तकारणम् । संसारोऽनादी । आगमोक्तकर्मानुष्ठानात् पशुपतिसारूप्य-प्राप्तिः - मोक्षः - इति,

९ **सांख्याः, योगिनश्च** — प्रकृतिरेव स्वतन्त्रा जगदुपादानकारणम् ; सैव कर्त्री, भोक्त्री च । आत्मा तु पुष्करपलाशवन्निर्लेपः । आत्मनः प्रकृतेश्च अनादि-सम्बन्धः - संसारः । प्रकृतिपुरुषविवेको - मोक्षः - इति,

१०. **पूर्वमीमांसकेषु — भाट्टाः, प्राभाकराश्च** — अनन्ता नित्यास्सर्वगता अनादिकर्मपरिपाकात् संसरन्त आत्मानः । प्रवाहतो नित्यः प्रपञ्चः । कर्मापूर्वमेव आत्मप्राप्तिरूपमोक्षहेतुः । ईश्वरस्तु निष्प्रमाणको नाभ्युपगम्यते - इति च वदन्ति । वस्तु-तस्तु जैमिनेरीश्वरनिरसने न तात्पर्यम् । किं तु कर्मण्यश्रद्धा माभूदिति, "कर्म-प्रभावादेव सकलपुरुषार्थाः सम्भवन्ति" इति प्रौढवादतया निरूपयामास ।

११. **उत्तरमीमांसकेषु — मायावादिनः** — निर्विशेषचिन्मात्रं ब्रह्म माया-शबलं भ्रमति । स एव संसारः । "तत्त्वमसी" त्यादिश्रुतिवाक्यजन्यविज्ञानेन भ्रम-निवृत्तिर्मोक्षः - इति,

१२. **भास्करीयाश्च** — सत्योपाधिमिश्रं ब्रह्मैव भ्रमति । स एव संसारः । वर्णाश्रमधर्मानुष्ठानसहकृत — वाक्यजन्यज्ञानपूर्वक — उपासनात्मकज्ञानेन उपाधिनाशो मोक्षः — इति,

१३. **यादवीयाश्च** — तदेव ब्रह्म सत्यचिदचिदीश्वरात्मकं परिणमति । तस्य तादृशभेदज्ञानं संसारः ; ज्ञानकर्मसमुच्चयात् भेदज्ञाननाशो - मोक्षः - इति,

१४. द्वैतिनश्च — स्वतन्त्रो भगवान् विष्णुः जगत्कारणम्; अस्वतन्त्रं तदितरजगत्, तस्मात् सर्वथा भिन्नमेव। जगद्ब्रह्मणोरत्यन्तभेदज्ञानात्, भक्तियोगेन च ब्रह्मणः सालोक्यादिप्राप्तिर्मोक्षः - इति च अभिदधति।

१५. विशिष्टाद्वैतिनस्तु — सूक्ष्मचिदचिद्विशिष्टः ईश्वरः - जगत्कारणम्; स्थूलचिदचिद्विशिष्ट ईश्वरः कार्यं जगत्। ज्ञानकर्मपरिकर्मितात् भक्तियोगात्, प्रपत्तियोगाद्वा विलक्षणदेशविशिष्टविशिष्टब्रह्मानन्दानुभवो मोक्षः। प्रपत्तियोगस्तु सर्वप्राणिसुलभः; तेन प्रसादितस्य श्रीमन्नारायणस्य अनुग्रहात् सर्वेषामपि स्वस्वरूपाविर्भावः, तेन ब्रह्मणा सह परमसाम्यापत्तिः, शुद्धसत्त्वमयवैकुण्ठलोकप्राप्तिः, तत्र श्रीमन्नारायणस्य दिव्यमङ्गलगुणगणविग्रहविभूत्यादीनामनुभवश्चेति मोक्षसाम्राज्याद्यनुभूतिः सम्पद्यते -- इति च प्रतिपादयन्ति।

एवमत्र सर्वेषामपि मतानां प्रक्रिया अनुसन्धेया॥

## नाटकेऽस्मिन् प्रधानो नायकः

उल्लोककमनीयतानिकेतने, नवरसभरिते, अमन्दानन्दसन्धायके आध्यात्मिकतत्त्वविषयविभासुरे नाटकेऽस्मिन् सचिवायत्तसिद्धिः वेदमौलिरेव नायकः; नेतृत्वौपयिकाः सकला अपि गुणाः, सर्वाणि च लक्षणानि सम्पूर्णानि तस्मिन् विद्योतन्ते।

नायकलक्षणं चोक्तं दशरूपके द्वितीयप्रकाशे। यथा —

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा॥ १॥

बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः॥ २॥ इति।

अत्र, विनीतः - विनयादिसुगुणगणसम्पन्नः; मधुरः - प्रियदर्शनः; त्यागी - सर्वस्वदायकः; दक्षः - क्षिप्रकारी; प्रियंवदः - प्रियभाषी; रक्तलोकः - रञ्जितसकलप्राणिः; रूढवंशः - प्रसिद्धकुलजः; स्थिरः - वाङ्मनःक्रियाभिरचञ्चलः; युवा - यौवने विराजमानः; बुद्धिः - ज्ञानम्, गृहीतविशेषकरी तु प्रज्ञा। स्पष्टमन्यत्।

एते सर्वेऽपि गुणाः सहजसुभगा विराजन्ते महाराजेऽस्मिन् वेदमालाविति, अभिवर्णयति कविरयं मुक्तकण्ठम्; यथा —

सर्वस्यापि हितं ब्रवीति समयाचारान् करोति स्थिरान्
मायाजीवपरानयं न सहते मानप्रतापोन्नतः ।
सम्मान्यस्सकलासु नीतिषु महासत्त्वः स्थिराङ्गो युवा
तस्मान्नेतृषु वेदमौलिसदृशो नान्योऽस्ति कश्चिन्नृपः ॥ इति ।

अयं च सचिवायत्तसिद्धिः धीरललितः; यथा समर्थयति कविरेव —

"मय्येव राज्यमखिलं विनिवेश्य राजन्!
विस्रब्धमेव विहरस्यवधूतकृत्यः ।
राज्यं मया च हतकण्ठकमेतदासीत्" (२-२) इति;

मायावादमुखतः । "निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः" इति हि धीरललितस्य लक्षणमुक्तं दशरूपके । तथैव हि मायावादेन प्रोत्साहितो वेदमौलिः संगीतनाट्यादिकलाविदग्धया मिथ्यादृष्ट्या क्रीडितुमुपक्रमते । श्रीमद्यामुनमुनिमुखतश्च - "त्वय्येवं ललिते सति मन्त्रिष्वेव कार्यभारः पर्यवस्यति" इति; "दुर्मन्त्रिवचनात ईदृशप्रेमशालिनीं त्वामपि दूरीकुर्वतो मे लालित्यमपि दोषाय" इति, "त्वयिमन्त्रिणि किं न सम्पद्यते ललितस्य?" इति च महाराजमुखतः; श्रीमद्रामानुजमुनिमुखतश्च — "महाराज! सुमत्या सह विहरन् विजयस्व । तिष्ठामि खलु ते धीरस्य लालित्यमुपलालयितुम्" इति ।

पुनः राजमुखतः ।

निधाय सर्वङ्कषनीतिमार्गे रामानुजे मन्त्रिणि राज्यभारम् ।
सुनीतिमत्या सुमते त्वयाऽहं क्रीडामि कृत्स्नैः विषयैः प्रहृष्यन् ॥

इति च, स्पष्टं लालित्यमुत्कीर्तितमिति ।

तथापि, धीरोदात्त एवायं भवति । तल्लक्षणं हि —

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥

इति दशरूपके प्रतिपाद्यते। महासत्त्वः - शोकक्रोधाद्यनभिभूतान्तःकरणः; अविकत्थनः - अनात्मश्लाघनः; निगूढाहङ्कारः - विनयच्छन्नावलेपः; दृढव्रतः - अङ्गीकृतनिर्वाहको धीरोदात्तः - इति तस्य विवरणम्।

एतादृशविलक्षणलक्षणविशिष्ट एवायमित्यत्र न कोऽपि सन्देहः। तद्यथा —

प्रथमत एवायं मायावादविषये विमनायते —

मानार्थतत्त्वहीनो मायाजीवी महामृषावादी।
सुमति – सुनीतिद्वेषी मामप्येवं करोति किं कुर्मः?॥

भेदोपजीव्यपि भिनत्ति तमेव भेदम्
मानं प्रतिक्षिपति मानपरायणोऽपि।
सोऽयं प्रमाणपुरुषैः स्वकरोपनीतान्
मिथ्येति वक्ति मिपतोऽपि हरन् महार्थान्॥ इति।

ततश्चैवमालोच्य निश्चिनोति —

"तदत्र किं प्रतिविधेयम्? (विचिन्त्य) तावदयमनुसरणीय एव, यावदस्माकमनुकूलोऽन्यो नीतिकुशलो कश्चिदमात्यपदं निवेशितस्स्यात्; अन्यथा, मामरातयो जीवग्राहं गृह्णीयु"रिति। अपि च निगूढाहङ्कारो दृढव्रतो भवति। सर्वं जानन्नपि क्षमावान्ताननुवर्तते, न तु मूढः, परतन्त्रश्च। वस्तुतस्तु, इदं तस्य सौशील्याद्यतिशयमेव पुष्णाति।

मिथ्यादृष्टिविलासिनीविलासलालसत्वमपि राज्ञः न वस्तुगत्या विद्यमानम्; किंतु, आरोपितमेव दाक्षिण्यवशात्। तथैव खलु समर्थयते कविः परमार्थतया। यथाहि —

प्रथमाङ्के — नारदः – वत्स! मा भैषीः। प्रकृतिनिर्मले स्फटिकमणौ प्रकृतोपरागः कियच्चिरं तिष्ठति?" इति,

चतुर्थाङ्के — सुमतिः — सखि! आर्यपुत्रस्य कथमात्मानं दर्शयामि, यः कश्मले रथ्यांभसि आत्मानं पातितवान्।

गीता — भद्रे! तस्य तादृशवर्धकीसंयोगो निरूप्यमाणः, प्रवादमन्तरेण परमात्मविदो न सम्भवति" इति च।

पञ्चमाङ्के — श्रीमद्यामुनमुनयोऽपि —

मन्त्रिषु न्यस्तभारोऽयं न तद्दोषेण दुष्यति ।
स्फटिकः किं प्रदुष्येत वर्णभेदैरुपाधिजैः ॥

इति, महाराजस्य परमार्थतो दोषराहित्यमुपपादयन्ति । अतोऽत्र लालित्यं — स्वाश्रितजनपक्षपातित्वनिबन्धनं भूषणायैव, न तु दूषणायेति मन्तव्यम् ।

किञ्च, चन्द्रमलयपवनादिसहायेन मन्मथेन नितरां पीड्यमानः मूर्च्छामुपगतो राजा, प्राणसखीभ्यां सुनीतिगीताभ्यामनुनीतायाः श्रीमत्याः महिष्याः सर्वाङ्गीणरमणीयायाः विष्णुभक्तिरूपायाः सुमतेः सुखस्पर्शेन प्रबोधितः, तामनुलालयति तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणां तां देवीमेवम् —

सुमते ! न भवत्येव श्रुतिमार्गानुसारिणी ।
तरले तव नेत्रे च मम चित्तापहारिणी ॥

छायामिवातपश्रान्तः, तृषितो जाह्नवीमिव ।
नीवीमिव दरिद्रस्त्वां कृच्छ्रलब्धां जहामि किम् ? ॥ इत्यादिना ।

अतः, प्रणयाभिमानादिपरमोदात्तगुणचरित्रसम्पन्नोऽयं धीरोदात्त एव ।

शास्त्रदिग्दन्तिनां वीरायितानां प्रचण्डे वादाहवे च प्रवृत्ते, राजा चायं, स्वस्य महोदात्ततां महासत्त्वतां महाभागतां महोदारतां च सम्यक् प्रकाशयति । स च प्रघट्टः, प्रस्फुरत्सुभगसुन्दरवीररसः परमावर्जको भवति परमरसिकानामिति, अतिरोहितोऽयं विषयः ।

स्वस्य प्रवीरतां च प्रस्फुटयति — मिथ्यादृष्टिप्रोत्साहितस्य दृप्तस्य योगाचारस्य सर्वनोदिकेन समाभटेन भीतभीतां सुमतिं समाश्वासयन्, क्षोभात् प्रतिपद्य स्वं महिमानमेवम् — राजा ; (सधैर्यम्) "अयि प्रिये ! किमाकुलासि ?

विरमतु तव भीतिर्वेपमानाऽसि किं त्वम् ?
विमतवनदवाग्निः वेदमालिः किलाहम् ॥" इति ।

अन्ते च सर्वमपि आध्यात्मिकं तत्त्वं यतिराजोपनीतं स्वयमेवोपदिशति सुस्फुटतया —

ध्यायन् सत्यम् (६-२४), यः प्रत्यक्षि (६-२६), कर्मव्याज (६-२७), सत्यारोप (६-२८) सर्वज्ञो न (६-३०) इत्यादिभिः श्लोकैः ।

सुनीति – सुमतिभ्यां चायं विषयः समुट्टङ्कितः; यथा – " (सप्रश्रयम्) देव ! भवन्तमन्तरेण को वा तत्त्वमुपदिशति ? " इति ।

किं च दिग्विजयोत्सवश्रवणसन्तुष्टमानसेन —

" द्विजेभ्यो दीयतां........प्रमुच्यतां सर्वे प्रबलभवकारागृहगताः । " इति, स्वस्य महौदार्यम्; भगवद्दिव्यमङ्गलविग्रहसन्दर्शनसञ्जनितभक्तिप्रकर्षेण – " जानेऽस्तव सत्यमर्जुन "(६-४५), "अके किलाम् "(६-४६) " परस्मादन्यस्मै "(६-४७) " तमो यत्प्रागासीत् " (६-४८) " अनिमूर्तिं गतः " (६-५२) इत्यादिभिः श्लोकैः, भगवतः सौशील्य - सौलभ्य वात्सल्य - स्वामित्वादिकल्याणगुणाश्च प्रकटीकृताः ।

अन्ते च —

" कुदर्शनानीतरदर्शनानि यतीन्द्र ! कुर्वन्निजदर्शनेन ।
सम्यक्कुदृष्टिन्यायकलापदर्शी सुदर्शनोऽसि प्रियदर्शनस्त्वम् ॥ " इति,

" मायावी सचिवो निरासि " ( ६-५५ ) इत्यादिना च सस्नेहबहुमानं मूलमन्त्रिशेखरं श्रीमन्तं यतिराजं प्रस्तौतितराम् । उद्विजते च नितरां स्वस्य मिथ्यादृष्टिव्यामोहं प्रति सुस्फुटतया – " रागान्धस्य समुचितोऽयं मार्गः, न तु नेतुरुदारशीलस्य । तथापि; सम्प्रत्येवमभिनेतव्यम् " इति ।

मन्त्रिणस्समुत्कर्षस्सर्वोऽपि राज्ञएव समुत्कर्षहेतुरिति स्थितमेव । अतः, अद्भुतेतिवृत्तक्रमे नाटकेऽस्मिन् सर्वलक्षणलक्षितः सर्वाङ्गसम्पन्नो वेदमौलिरेव धीरोदात्तो नायकः । तस्य च दक्षिणहस्तस्थानीय, अतिविमलनिशितप्रतिभाप्रभावशाली, परमोदारोदात्तहृदयः, चटुलगम्भीरगतिः, अकृत्रिमापरिमेयदिव्यकल्याणगुणगणमहोदधिः, सर्वजनसम्मोहनकरविलक्षणविग्रहविभूतिः, अतिसमर्थः, श्रीमत्सुदर्शनापरावतारः, यतिराजो मुख्यो मूलमन्त्री सञ्जात इति, हेतुः पुनरामोदः । तस्य च मन्त्रिवर्यस्य प्रतिभाप्रतापमहिम्ना महाराजस्य महान् विजयः सुसम्पन्नः । दुर्मन्त्रिकृतकुहनाकुदृष्टिवागुरा-

(iv)

बन्धविनिर्मोकरूपो विजयो राज्ञ एव ; मूलमन्त्रिणि यतिराजे स्थितः शत्रुविजयसमुत्साहो राज्ञ एव फलप्रद इति, वीर्यमपि तन्निष्ठं तद्गतं भवति - इति च सर्वं समञ्जसम् ।

"वेदान्तविलास" इति नाम्न औचित्यमपि तदैव खलु सम्भवति ।

ननु "यतिराजविजय" इति नाम्नः प्रसिद्ध्या, यतिराज एव प्रधाननायकोऽस्तु ; मुद्राराक्षसादौ चाणक्यादिवदिति चेत् ; दृष्टान्तेऽपि तुल्यो विचारः । मन्त्रिणो विजयः, राज्ञ एव प्रशस्तिं सम्पादयतीति, प्रकृते यतिराजस्य विजयो राज्ञः श्रीवेदमौलेरेव उत्कर्षावह इति, "यतिराजविजय" इति नामधेयमपि तदनुकूलमेव, न प्रतिकूलम् ।

वेणीसंहारमुद्राराक्षसादिसमानयोगक्षेममिदं नाटकरत्नमिति, तत्र प्रवर्तिता वादा अत्रापि समवतरन्तीति च, तद्विवेचनाभारं विमर्शकानां हस्तेषु समर्पयन् विरमामि विस्तरतः ।

---

## अत्र प्रधानो रसः

अस्मिन्नाटके प्रधानो रसो वीर एव भवितुमर्हति । तल्लक्षणमुक्तं दशरूपके ;

यथा —

वीरः प्रतापविनयाध्यवसायसत्त्वमोहाविषादनयविस्मयविक्रमाद्यैः ।
उत्साहभूः स च दयारणदानयोगात् त्रेधा किलात्र मतिगर्वधृतिप्रकर्षाः ॥ इति ।

अत्रावलोकः—

"प्रतापविनयादिभिर्विभावितः, करुणायुद्धदानाद्यैरनुभावितः, गर्वधृतिहर्षामर्पस्मृतिमतिवितर्कप्रभृतिभिर्भावितः, उत्साहः स्थायी, स्वदते भावकमनोविस्तरानन्दाय प्रभवतीत्येष वीरः" इति ।

अत्र मुनिः— अथ वीरो नाम उत्तमप्रकृतिः उत्साहात्मकः । स च असंमोह - अध्यवसाय - विनय - बल - पराक्रम - शक्ति - प्रताप - प्रभावादिभिर्विभावैरुत्पाद्यते । तस्य स्थैर्य - धैर्य - त्याग - शौर्य - वैशारद्य - आक्षेपवाक्यादिभिरनुभावैः अभिनयः

प्रयोक्तव्यः । व्यभिचारिणश्चास्य स्मृति - मति - गर्व - वेग - औग्र्य - अमर्ष - रोमाञ्चा- द्यः " इति ।

प्रस्वेदरक्तवदनत्वादिक्रोधानुभावरहितो युद्धवीरः ; अन्यथा रौद्रः - इत्यनयो- र्विवेकः । अत्रार्ये भवतः —

उत्साहाध्यवसायादविषादाद्विस्मयादसंमोहात् ।
विविधादर्थविशेषात् वीररसो नाम सम्भवति ॥

स्मृतिधैर्यशौर्यगर्वैरुत्साहपराक्रमैः प्रभावैश्च ।
वाक्यैराक्षेपकृतैः वीररसः सम्यगभिनेयः ॥ इति ।

[ रसविवेके — तृतीयोल्लासे ]

नाटके चास्मिन् प्रथमत एव श्रीमति यतिराजे असंमोह - बल - पराक्रम - शक्ति — प्रतापादय उल्लोकप्रभावा अभिवर्ण्यन्ते । यथा —

" भरतः - सर्वङ्कषो हि महिमातिशयो यतिराजस्य, यदयमेवं विधास्यति ।

नारदः — किमत्राश्चर्यम् ?

निरस्य तिमिरं भानुः निधत्ते जगति श्रियम् ।
एवमेनं यतीन्द्रोऽपि स्वपदे स्थापयिष्यति ॥

भरतः — भगवन् ! अनभिज्ञतया निदानमस्य वेदितुमिच्छामि ।

नारदः — देवरहस्यमिदम् ; सात्त्विकादन्यत्र रक्षणमर्हति ।

मायाविमोहितसुरानसुरानलावीत्
येनाच्युतस्स कुहनासमयैर्मनुष्यान् ।
सम्मोहयत्सु पुनरेषु सुदर्शनोऽपि
तानेव जेतुमधुना यतिशेखरोऽभूत् ॥

तदस्य सर्वमीषत्करमवधारय ।

भरतः — (सहर्षम्) " तर्हि जितं महाराजेन " — इति प्रबन्धेन ।

उपरि च---- " त्रिदण्डकाषायशिखोपवीतैः प्रसादयन् पारमहंसलक्ष्मीम् ।
वैकुण्ठमार्गं पथितुं मुमुक्षून् सोपानकारी यतिराज एषः ॥ "

इति महाराजमुखतः,

" स एष खलु सकलपापण्डतिमिरपण्डचण्डकरः चरमाश्रमरूपी परमकारुणिको भगवदवतारः । तथाहि ---

स एष साक्षात्कृतकृष्णदत्तां निक्षेपविद्यां निरवद्यभूमौ ।
गद्यात्मना कृष्णजनोपभोग्यां संवादरूपां विदधे दयालुः ॥

अस्ति खल्वेवमितिहासश्च ; यदुत,

काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः ।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥

इदानीं स एवायं स्यात् । अश्रद्दधानोऽपि, दिव्यशक्त्यन्यथानुपपत्त्या " स एवाय"मिति निश्चिनुयात् । " इति धर्मस्य मुखतः,

" रामानुजस्य मति - नीति - प्रतिभा - सत्त्व - समुत्साहसम्पदः समीक्ष्य " इति सद्विद्यामुखतः,

" सम्प्रति बाह्यकुदृष्टिदुष्टसचिवपीडितो मदाज्ञापरिपालको वेदमौलिर्व्याकुली-भवति । तद्भवता तत्परिपालनं कर्तव्यम् " इति, " यदुत, तदनुगुणमतिनीति – सत्त्व-समुत्साहादिसहायसम्पदं दत्त्वा रामानुजं प्रहितवान् " इति च काञ्चीपूर्णलेखमुखतः, रङ्गप्रिय - प्रियरङ्गनामकाभ्यां वाधूलदाशरथि - वात्स्यवरदर्शनाभ्याम् , " निरवद्यनिखिल-नीतिनिधिमेवं रामानुजम् " इति गीतामुखतः, सदूहनामकतन्त्रपालमुखतः, किं बहुना, प्रत्यर्थिभूतशंकरमुखतश्च ---

" अतिमानुषोऽयमस्य प्रथयत्याकार एव महिमानम् ।
सलिलमिव मेरुमिन्द्योर्निर्मलमन्तर्गतं महारत्नम् ॥

तदिदं अत्यद्भुतं ज्योतिः परैरनभिभवनीयमेव । "

इति च, श्रीमद्यतिराजस्य प्रतापमहिमादयोऽभिवर्णिता एव ।

"यद्यहम् — आत्मरामस्य मे किमेभिर्मनोव्याक्षेपैरिति, मौनमास्थितः स्याम् ; तदा, कुमतिसमयैरपहृतविषयो वेदमौलिः क्व पदमादध्यात् ? ततस्तदनुसारिणी परमपुरुषार्थकथा, धर्मकथा च न क्वचितिष्ठतीति, सकलजीवलोकसन्तापः स्यात् । तस्मादनेकजीवलोकसन्तापादेकसन्तापो वरम् - इति अस्मदुद्योग एव श्रेयान्" इति,

"निशातनिस्त्रिंशकठोरश्चारैर्विलूय वेदप्रतिपक्षमूहैः ।
महोत्सवो विष्णुपदाश्रितानां मया विधेयो महतां जनानाम् ॥"

इति च स्वस्य उत्साहोद्योगौ प्रकटयति भगवान् यतिराजः स्वयमेव । अतः, विभावानुभावसात्त्विकव्यभिचारिभावसामग्रीसमुल्लासितः स्थायी समुत्साहः, वीररसात्मना समास्वाद्यते ह्यनुभवरसिकैर्भावुकैरिति, अत्र वीर एव प्रधानो रसो विराजते नितराम् ।

श्रीमति मूलमन्त्रिणि यतिराजे गतस्समुत्साहः, राज्ञ एव फलप्रद इति निरूपितमेव ।

प्रतिनायकश्चात्र चार्वाकबौद्धादिसमुत्तम्भितो मायावाद्येव । तस्मिंश्च दर्पमात्सर्यचण्डवृत्तिविकत्थनत्वादयो धर्माः परिपूर्णा एव । अतः, स धीरोद्धतः ।

तान् सर्वानप्यरातीन् निज - निपुण - मति - नीतिशक्त्यादिभिर्निरस्य, मिथ्यादृष्टिविमोहितं राजानं सहधर्मचारिण्या महिष्या सुमत्या सुनीतिसहकारेण संयोज्य, अद्वितीयं तत्पदवैभवं पुनस्सम्प्रापयतिस्म वेदमौलेः कृपामात्रप्रसन्नाचार्यो यतिसार्वभौमः । तस्य च अकुण्ठितप्रयत्नप्रभावतः, भगवान् वेदमौलिः, सम्राडभूदद्वितीयः—इति सर्वमनवद्यम् ।

"एको रसोऽङ्गीकर्तव्यो वीरः शृङ्गार एव वा ।
अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥"

इत्यादिना दशरूपकोक्तं नाटकलक्षणं च सम्यक् समन्वयीकृतम् । सुमतिवेदमौल्योः शृङ्गारः [1]विप्रलम्भसम्भोगोभयात्मकः साधु परिपोषं नीतः । हास्य - अद्भुत - रौद्रभीभत्स-

---

1. विप्रलम्भो यथा —

मलयपवनो मर्मच्छेदी मधुव्रतनिस्वनः
श्रवणपरुषो वपलयसि स्फुलिङ्गमयं शशी ।

भयानक - करुण - शान्ताश्च यथायथं ललितोचितसन्निवेशरम्यतया निरूपिताः — इति, नवरसभरितमिदं नाटकं विजयतेतमाम् । रसाभास - भाव - तदाभासादयः सात्त्विकादयश्च भावा अनुभावाश्च निपुणतमं निरूपिता विद्योतन्ते ।

संकल्पसूर्योदये च श्रीमद्भिः कविकथककण्ठीरवैर्वेदान्ताचार्यैः प्रौढगम्भीर-सन्दर्भेण समुन्मीलितः पन्था अपि अत्रानुसन्धेयः । तद्यथा —

विवेकप्रागल्भ्यस्फुरितरणवीरव्यतिकरः
परब्रह्मोदन्तप्रकटितदयावीरविभवः ।
प्रबुद्धक्षेत्रज्ञस्थितिघटितशान्ताकृतिरभूत्
प्रयोगश्चित्रोऽयं भवरसभुजामप्यभिमतः ॥ इति ।

शान्तो वा रसः प्रधानो भवितुमर्हति — एतादृशेषु अध्यात्मिकेषु नाटकेषु ; नाटके च वीरशृङ्गारयोरुपवर्णनस्य प्रायोवादरूपत्वस्य सिद्धान्तिततत्त्वादिति केचित् ।

---

भवति च मनःशल्यं माकन्दभूरुहमञ्जरी
सुमतिविरहे सर्वो लोको भवत्ययमन्यथा ॥

यथावा —

कामो मे रिपुरेव चन्द्रमरुतौ ! कस्मं स मां बाधताम्
युक्तं मां युवयोः किमात्मसुहृदं दग्धुं जगच्छीतलौ ।
प्राप्तं वह्निसखस्य तद्भवतु वा चन्द्र ! त्वया शाम्यताम्
नोचेत्त्वं सुहृदातिवाहिकसभामध्ये कथं स्थास्यसि ?

सम्भोगो यथा —

मुदितः कदा शयिष्ये मुखमिदमाघ्राय मुकुलितापाङ्गम् ।
मुग्धस्मितं रतान्ते मुक्ताताटङ्कमुद्रितकपोलम् ॥

तिर्यग्गतसम्भोगो यथा —

कुण्डलितकण्ठनालाः कुर्वन्ति सुखेन घूर्णितापाङ्गाः ।
कण्टकिनि कमलकाण्डे कण्डूयनकेलिमुत्सुका हंसाः ॥

हास्यरसो यथा —

तृतीयाङ्के — भास्कर - यादव - मायावादादीनां वाक्केलौ हास्योऽनुभूयते ; यथा —

भास्करः — ( मायावादं प्रति सोल्लुण्ठम् ) सर्वलोकशास्त्रसाधारणीमपि प्रमाणप्रमेयपद्वी-मपलपतस्ते चिरात् गोपितमपि सर्वज्ञत्वमुन्मीलति ।

याद – भोः सर्वोपलापिन् ! प्रमाणव्यवस्थामनादृत्यापि यत्किञ्चित्साधयन् , त्वमपि यस्य-कस्यचिद्यतिर्भिक्षुर्देवासि । ( सर्वे हसन्ति )

भास्करः – किं सर्वज्ञत्वमपि ते दोषाय ; तर्ह्यन्यथाऽस्तु — इत्यादिप्रकरणे ।

अद्भुतो यथा – उल्लोकतेजो विराजितं यतिराजमवलोक्य राज्ञः, धर्मस्य च विस्मयोऽयमभि-वर्ण्यते - यथा —

त्रिदण्डकाषाय शिखोपवीतैः, प्रसादयन् पारमहंसलक्ष्मीम् ।
वैकुण्ठमारोपयितुं मुमुक्षून् सोपानकारी यतिराज एषः ।

( अं० १–३१ श्लो ) इत्यादौ ।

रौद्रो यथा —

मायावाद – तन्त्रपालादिवाक्येषु क्रोधोऽभिव्यज्यते । – यथा — मायावादस्य (५-१२) –

पादाघातकिरीटघर्षणमहामुष्टिप्रहारव्यथा-
मुह्यन्न्यायमुखच्युतेन रुधिरोद्गारेण शाम्यन्नपि ।
क्रोधाग्निर्मम दुर्मदस्तव यशःमर्चीषि पीत्वा जग
त्युत्सर्पन्ति यतीन्द्रनिर्भरकथादर्पोऽयमुत्सर्पति ॥

यथावा – सद्रहस्य (५-५) —

सप्तद्वीपप्रदीव्यत्सकलजनमतिच्छादनेच्छासमुद्य-
न्मायासिद्धान्तकन्थाशतलवनकलान्तर्गवृत्तिरेषः ।
सप्तव्यूहः सद्रहः सदसि यतिपतेः तन्त्रपालस्त्वदा किं
दृप्यद्दुर्वादिगर्वेक्षपणमखविधौ दीक्षितो नेक्षितोऽहम् ॥

बीभत्सो यथा —

वल्गत्खड्गनिपातनिष्ठुरमहातर्काभिघातत्रुटत्
द्वैतग्रन्थिसिरामुखस्रवदसृग्धारासमाराधिताम् ।
कालीं केरलकेलिकल्पलतिकां कालानलोद्गारिणीम्
प्राप्तः प्रीणयितुं प्रवादुकशिरोमुण्डोपहारैरहम् ॥ (५-४)

भयानको यथा — ( पञ्चमाङ्कारम्भे )

देवी - ( तच्छ्रुत्वा सभयोत्कम्पम् ) कोऽसौ महाराक्षसः ?

( इति समाकुला भर्तारमालिङ्गति ) इत्यत्र ।

करुणो यथा — ( द्वितीयाङ्के राजा ) —

हा ! प्रिये ! किं करोमि ?

तिर्यगवलोक्य यान्तीं दीनैरपि दीर्घपातिभिरपाङ्गैः ।
मम चिन्तयन्मनस्त्वां पाकलीढमिव परितपत्यन्तः ॥ (२-२२) इति ।

"इह तु शान्तरसं प्रति बहुविधा विप्रतिपत्तयो विद्यन्ते ; तथाऽपि वयं तत्त्वज्ञानजनितस्य निर्वेदस्य स्थायितामभ्युपगच्छन्तो निर्वेदस्थायिभावं शान्तरसं ब्रूमः । उक्तं हि काश्मीराधिपतिना — "निर्वेदस्य अमङ्गलप्रायस्य प्रथममनुपादेयत्वेऽपि उपादानं, व्यभिचारिणोऽपि स्थायित्वव्यवस्थापनार्थम् । तेन निर्वेदस्थायिभावः शान्तोऽपि नवमो रसः" इति - शान्तरसोऽपि व्यवस्थाप्यते रसविवेके ।

नागानन्दादौ "पित्रोर्विधातुं शुश्रूषाम्" इत्यादिना शान्तरसोऽनुवर्णितः ।

वस्तुतस्तु तत्र दयावीर एव रसः, जीमूतवाहनश्च धीरोदात्त एव नायकः । न च जीमूतवाहनः शान्तरसाश्रयोऽपि धीरशान्तः, अपितु धीरोदात्त एव । औदात्यं नाम - सर्वोत्कर्षेण वृत्तिः । तच्च जीमूतवाहने पुष्कलमेव । न खल्वेकरूपैव विजिगीषुता । यस्तु वपुषस्त्यागेन कारुण्येन गुणान्तरेण वा अन्यानतिशेते, सोऽपि विजिगीषुरेव । तद्वदिहापि नाटके नायको वेदमौलिर्धीरोदात्त एव ; रसश्च वीररस एव भवितुमर्हति - इति व्यवस्थापितमेवास्माभिरधस्तात् ।

परमार्थतस्तु, निगमपरिमलपरिमिलितेऽस्मिन्नाध्यात्मिकनाटकतिलके भक्तिरेव प्रधानो रसो भवितुमर्हति । परमपुरुषे निरवधिका निरन्तरा च प्रीतिरेव - भक्तिः । सैव भगवत्प्राप्तिरूपपरमपुरुषार्थलम्भिका भवतीति सकलानां वेदान्तानां परमं तत्त्वरहस्यम् ।

---

यथावा —

मा त्वं प्रयाहि मदिराक्षि ! मया कृतं ते
पश्यामि नाल्पमपि दोषमथापि किं माम् ।
काष्ठागतप्रणयकन्दलितं जहासि
का वा गतिर्मम भविष्यति कांक्षनस्वाम् ॥ (२-१३) इति ।

शान्तो यथा — सूत्रधार - विद्वन् ! किमन्यद्ब्रवीमि ?

सुर - नर - तिर्यक् स्थावरदेहास्सर्वेऽपि नश्वरा एव ।
तत्क्षणमपि यदि जीवेन जीवतु देही परोपकारेण ॥ (१-६) इति ।

यथावा —

भास्वानेष तमो निहन्ति सकलप्रह्लादकारी शशी
किं तावेव फलादिभिश्च तरवः किं नोपकुर्वन्ति न ।
एवं वस्तु परोपकारि सकलं दृष्टाऽपि नष्टाशयो
यस्स्वार्थैकपरो भवत्ययमहो ह्यन्तःशून्यो जनः ॥ इति ।

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः, तस्यैष आत्मा विवृणुते तनूँ स्वाम्"

इति भगवती श्रुतिरियं, परमपुरुषवरणीयताहेतुगुणेन तद्विषयकनिरन्तरप्रीतिरूपेण परमेण भक्तिप्रकर्षेण परिपूर्ण एव महात्मनि भगवतोऽनुग्रहः प्रसरतीति उपदिशति ।

"प्रियतम एव हि वरणीयो भवति; यस्यायं निरतिशयप्रियः, स एवास्य प्रियतमो भवति" इति, प्रपञ्चितोऽयमर्थः श्रीभगवद्रामानुजमुनिचरणैश्च श्रीभाष्ये ।

नान्दीमारभ्य प्रस्तावनायाम्, ग्रन्थान्ते च, विशिष्य भगवद्भक्तिरेव विपुलतमं व्यज्यत इति, उपक्रम - उपसंहाराभ्यां अभ्यासेन, अर्थवादोपपत्त्यादिना च प्रधानो रसो भक्तिरेवेति व्यवस्थापयितु शक्यत एव ।

ननु "रतिर्देवादिविषया व्यभिचारी तथाञ्जितः, भावः प्रोक्तः" इति, - देव - द्विज - मुनि - नृप — पुत्रादिविषयां रतिमुत्कृष्टामपि "भाव" मेव खलु व्यवहरन्ति सन्तः, न तु रसं प्रामाणिकाः इति चेत्, अत्र ब्रूमः । "प्रमोदात्मा रति" रिति वचनात् रतिप्रीत्योरेकार्थतया भक्ति - वात्सल्यादीनामपि शृङ्गार एवान्तर्भावः । देव - अपत्यादिविषयायां रतौ शृङ्गारव्यावहारो नास्तीति चेत्, माभूद्व्यवहारः, तथाप्यसौ शृङ्गारान्नातिरिच्यते । न खलु अग्निरिति व्यवहारो नास्तीति सुवर्णं भूतान्तरं भवितु-मर्हति, अपितु तेज एव । अयं तु विशेषः — कान्ताविषयो रत्युत्कर्षः "शृङ्गार" इति व्यवह्रियते, अपत्यविषयस्तु "वत्सल" इति, देवादिविषयश्च "भक्तिः" रिति; सर्वत्रापि स्थायिन एकत्वमेवेति । एवंसति "नवैव रसा" इति मुनिवचनेनापि न विरोधः ।

वस्तुतस्तु, पुरुषोत्तमविषये "स्त्रीप्रायमितरं जगत्" इति सर्वस्यापि जगतः स्त्रीप्रायरूपत्वात्, तस्मिन् विद्यमाना रतिः शृङ्गार एव स्वरसतया भवितुमर्हतीति प्राहुः सहृदयतल्लजाः शुद्धान्तसिद्धान्तिनः । तथाहि —

"पुंस्त्वं नियम्य पुरुषोत्तमताविशिष्टे स्त्रीप्रायभावकथनाज्जगतोऽखिलस्य ।
पुंसां च रञ्जकवपुर्गुणवत्तयापि शौरेश्शठारियमिनोऽजनि कामिनीत्वम् ॥
या प्रीतिरस्ति विषयेष्वविवेकभाजां सैवाच्युते भवति भक्तिपदाभिधेया ।
भक्तिस्तु काम इह तत्कमनीयरूपे तस्मान्मुनेरजनि कामुकवाक्यभङ्गी ॥

यश्चैतस्यैव विशदानुभवः परस्मिन् संश्लेष एष गुणरत्नमहाम्बुराशौ ।
विच्छित्तिरस्य विरहस्त्विह याऽङ्गसङ्गलाभव्यथा विरचिता मुनिपुङ्गवस्य ॥ "

इति द्रमिडोपनिषत्सङ्गत्यां सुस्फुटमभिवर्णितं श्रीमद्भी रम्यजामातृमुनीन्द्रैः ।

" पाञ्चालीगात्रशोभाहृतहृदयवधूवर्गपुम्भावनीत्या
पत्यौ पञ्चासहाये प्रणयिनि भजतः प्रेयसीपारतन्त्र्यम् ।
भक्तिः शृङ्गारवृत्त्या परिणमति मुनेर्भावबन्धप्रथिम्ना
योगात्प्रागुक्तभावस्थितिरिह विरहो देशिकास्तत्र दूताः ॥ "

इति द्रमिडोपनिषत्तात्पर्यरत्नावल्यां च श्रीमद्वेदान्तदेशिकचरणैरुदटङ्कि ।

अतः, भक्तौ शृङ्गारव्यवहारः, दिव्यसूरिदिव्यप्रबन्धेषु प्रगाढपरिचयवतां नापरिचितस्समस्ति । इतरेषां नास्तीति चेत्; न ह्येष स्थाणोरपराधः, यदेनमन्धो न पश्यति । अव्युत्पन्नवेदान्तानां ' मुख्यया वृत्त्या सर्वे शब्दाः परमात्मबोधकाः "इति ज्ञानाभावेऽपि, व्युत्पन्नवेदान्ताः — " सर्वशब्दवाच्यः परमात्मैव " इति विजानन्त्येव हि ।

अतोऽत्र भक्तिरस एव प्रधानो रसो भवितुमर्हति ; इति आस्तां विस्तरेण ।

विस्तरस्तु " आध्यात्मिकानि नाटकानि " इति मदीये व्यासे द्रष्टव्यः ।

---

## पात्रपोषणम्

श्रीमान् वेदमौळिः, यतिराजश्च धीरोदात्तौ, आदर्शजीवितौ, हेयप्रत्यनीक-असंख्याककल्याणगुणगणविभूषितौ, सुशीलौ, सुभगसुकुमारसुन्दरविग्रहौ, वीर्य - धैर्य - शौर्य - पराक्रमादिविशिष्टौ धर्मज्ञौ कृतज्ञौ सत्यवाक्यौ दृढव्रतौ सर्वभूतहितौ प्रियदर्शनौ जितक्रोधौ च चित्रितौ । मायावादो महामन्त्री, सद्भूहस्तन्त्रपालश्च धीरोद्धतावभिवर्णितौ । श्रीमद्यामुनमुनिरतिविशिष्टतया अत्युदारगम्भीरोदात्ततया च अभ्यवर्णि । भास्कर - यादवौ च नात्युद्धतौ, नातिशान्तावभिवर्णितौ । पराङ्कुशः परमपूज्यपदेऽभिषिक्तः । धर्मः अतिविनीतश्चित्रितः । अन्ये च यथायथं तत्तत्पात्रोचितसन्निवेशेन समुपवर्णिताः पुरुषास्सर्वे ।

स्त्रीपात्रेषु - सुमतिः - पट्टमहिषी, उदारमङ्गलगुणा, वेदान्तस्य तुल्यशीलवयो वृत्ता, तुल्याभिजनलक्षणा, अनन्यार्हत्व—अनन्यशरण्यत्व - अनन्यभोग्यत्वरूप - आकार-त्रयसम्पन्ना सकललोकोज्जीवनकरी राज्ञश्चात्यन्तवल्लभा सम्यगुपवर्णिता । तस्याः सख्यौ सुनीतिः, गीता च महनीयमङ्गलगुणचरित्रे, नायिकानायकयोरत्यन्तप्रणयिन्यौ, संघटनकर्मणि नितरां जागरूके समुपवर्णिते । अत्र कविः, उत्तररामचरित्रे निबद्धाः - सीता - तमसा - वासन्तिकाः, शाकुन्तले चोपनिबद्धाः - शकुन्तला - अनसूया - प्रियंवदाश्च स्मारंस्मारं, एताः सुमति - सुनीति गीताः चित्रितवानित्यस्मूहस्समुचित इव प्रतिभाति । अन्यत्सर्वं पाठकमहाशयैरेव सहृदयैः स्वयमनुभूयत एवेति विस्तरभीत्या विरम्यते ।

अस्मिन् नाटके — प्रथम, द्वितीय, चतुर्थ, पञ्चम, षष्ठाङ्केषु पञ्चसु विष्कम्भाः, तृतीयाङ्के प्रवेशकश्च, वृत्तवर्तिष्यमाणानां कथांशानां निदर्शनाय उपनिबद्धाः । तत्र, प्रथमाङ्के - " नारं ददातीति नारदः "इति व्युत्पत्त्या लोकानां विज्ञानप्रसादको नारदः—नाट्यद्वारा पण्डितपामरसाधारण्येन विज्ञानामृतसेचकाय भरताय, तन्मुखेन सर्वलोकेभ्यश्च, यतिराजस्य सुदर्शनावतारत्वं, तद्दर्शनस्य परमार्थत्वम् , परमहितत्वम् , वेदान्तस्य अत्यन्तान्तरङ्गत्वम् , तेनैव तस्य सकलप्रत्यर्थिनिरसनेन स्वपदे व्यवस्थापनं च ख्यापयतीति, सुमहानयमामोदः । चतुर्थाङ्के च—गीताजनकयोः सम्भाषणेन, विष्णोः दिव्यमङ्गलविग्रहस्यानुभवः, जीवपरयोर्न स्वरूपैक्यम् , किंतु स्वभावैक्यमेव - इत्ययमपि प्रधानांशो विख्यापित इति सुमहान् अनुग्रहश्च ॥

---

## ग्रन्थकर्तृकालदेशादिविवरणम्

एतन्नाटकप्रणेतारस्तु, " नडादूर् अम्माळ् " इति प्रसिद्धानां श्रीमतां श्रीमच्छ्री-भाष्यप्रवचनप्रथितविभवानां श्रीभगवद्रामानुजमुनिपूर्वाश्रमभागिनेयस्य श्रीमत्सुदर्शनाचार्या-परनामधेयस्य श्रीमद्वात्स्य — वरदविष्णुगुरूत्तंसस्य पौत्राणां वात्स्यवरदाचार्याणां पञ्चमा इति स्फुटं तैरेवोत्कीर्तनात् ज्ञायत एव । तन्नामतौल्यादेतानपि " अम्माळ् " इति अभिधातुं प्रवृत्ता जना इति प्रतिभाति ।

श्रीमतां परमहंसपरिव्राजकाचार्याणां श्रीमदादिवणशठगोपयतीन्द्राणां अहोबिलमठस्थापकानां आचार्या एते। अतः चतुर्दशशतकाब्दे काञ्चीनगर्यां एते आसन्निति निश्चप्रचोऽयं विषयः। नाटकप्रस्तावनया च एतत्सम्बन्धिनः सर्वे विशेषाः ज्ञायन्त एव।

एभिरेव विरचितो वसन्ततिलकबाणः परमसुकुमारसुभगः सकलसहृदयजेगीयमानभोग्यतातिशयो विजयतेतमाम्। ततोऽप्येतेषां चारित्रकविशेषा विज्ञातुं शक्यन्ते।

---

## व्याख्यानस्य परिचयः।

आध्यात्मिकतत्त्वविचारप्रवणमिदं वेदान्तविलासं नाटकं, अतिललितमपि वेदान्तमहार्थगर्भं, व्याख्यानमन्तरा न सम्यगवबोद्धुं शक्यत इति, तत्सम्पादने कृतप्रयत्नोऽहं मद्राष्ट्रराजकीयतालपत्रपुस्तकालये ( Government Manuscript Library Madras ) R. ७९० संख्याकं कञ्चन पत्रलिखितश्रीकोशमुपलभ्य, स्वयमेव तदनुविलिख्य, आनीय, मूलेन सह मुद्रणाय च सज्जमकरवम्।

व्याख्यानस्य प्रतिरियमेकैव उपलभ्यते। इयं च श्रीकुरुकापूर्यां ( आल्वार् तिरुनगर्यां ) उत्तरश्रीगेहे (वडक्कुत्तिरुमाळिगै) विद्यमानाया मातृकाया निष्पन्ना पुत्रिकेति,

"Transcribed in 1912-13 from a M. S. S. of

Vadakku Tirumaligai in Alwar Tirunagari" इति तस्या मातृकाया अन्ते विलेखकस्य विलेखनेन विज्ञायते। अस्य श्रीकोशस्य परिचयः, तत्पुस्तकालयश्रीकोशपट्टिकायामेवं कृतः —

R. No. 790. वेदान्तविलासव्याख्या — रत्नदीपिका।

Paper 11 + 9 inches. Foll 26. Lines 20 in a page. Devanagari Good. Complete.

A Commentary on the Vedanthavilasa, also called Yathirajavijaya, which is a Drama in six acts based on

the leading incidents in the life of Srimath Ramanuja Acharya. — इति ।

व्याख्यानमिदं वेदान्तविषयविवेचनपरं रमणीयं संक्षिप्तं अपेक्षितविषयमात्र-विशदीकरणप्रवणं "धावद्व्याख्यान" मुपलभ्यते ! केचन प्रघट्टा इतःपूर्वमेवास्माभिः सहृदयानां मानसोल्लासाय सन्दर्शिताः । स्थूलत , आदित आरभ्य आन्तं, सारतमा विषया अनुबन्धे निवेदयिष्यन्ते ।

अस्य व्याख्यानस्य प्रणेता को वेति, तस्य कालदेशादिकं किमिति च न ज्ञायते । प्राचीनानां महतां प्रायशो धोरणी इयमेव हि, यत्स्वनामादिकं न ख्याप्यते, स्ववैभवप्रकटनं च न सह्यते, अहङ्कारममकारमर्षणपरतयेति ।

"श्रीवेदान्तविलासस्य नाटकस्य यथामति ।
प्रणम्य वरदं व्याख्या क्रियते रत्नदीपिका ॥"

इति मङ्गलश्लोकेन प्रथमेन, "अन्तर्वेदान्तसाम्राज्यम्" इत्यादिना द्वितीयेन च अनुबन्धिचतुष्टयं सूचयता, स्वाहङ्कारनिरसनं कुर्वता, इष्टदेवतां प्रणमता, मृदुमधुर-संक्षिप्तभाषिणा व्याख्याकृता, अंशद्वयं परमत्र समुट्टङ्कितम् – व्याख्यानस्य नाम रत्नदीपि-केति, वरदः इष्टदैवतमिति च । रत्नदीपिकेति सर्वथा अन्वर्थमिदं नामधेयम् । अयं वरदः, देवो वा, गुरुर्वा, उभौ वा । तेन वरददैवतोपासकः, वरदाचार्यस्य शिष्योऽयं भवति । वरदस्तु काञ्चीपुर्यां विराजमानः ; अतः ग्रन्थकर्तुरावासभूमिः काञ्चीपुरी भवितुमर्हति - इत्यभ्यूहः समुचितो वेति सुधियो विभावयन्तु । एतदपेक्षया अन्यत्किमपि तदधिकृत्य न ज्ञायते ।

मूलस्य तु अनेका मातृका अस्मत्पुस्तकालये, अन्यत्र च उपलब्धाः । ताभिस्सह समीकृत्य, तत्रत्याः पाठभेदा अधो निवेशिताः । व्याख्यानसन्दर्शनेन केचन नूतनाः पाठभेदा उपलभ्यन्ते, ते, अन्ये च तत्रत्या विशेषाः सर्वे, अनुबन्धे प्रदर्शयिष्यन्ते ।

मूलस्य प्रागेव मुद्रणस्य निष्पन्नतया व्याख्यानमिदं अनुबन्धरूपेण संमुद्र्यते प्रत्येकशः । अतोऽत्र क्षम्यतां वत्सलैः पाठकमहाशयैरिति संप्रार्थ्यते ।

---

## कृतज्ञताऽऽविष्करणम्

अस्य व्याख्यानस्यानुलेखनाय, मुद्रणाय च कृपया अनुमतिं दत्तवद्भ्यः सहृदयतल्लजेभ्यः मद्रराष्ट्रराजकीयतालपत्रपरिशोधनालयप्रधानाध्यक्षेभ्यः अस्मत्सुहृद्वर्येभ्यः ब्रह्मश्री- T. चन्द्रशेखरदीक्षित (M. A. L. T.) महोदयेभ्यः विशिष्य कृतज्ञता निवेदनीया समस्ति ।

सव्याख्यानस्यास्य ग्रन्थस्य मुद्रणाय सर्वविधसौकर्यसम्पादनेनानुगृहीतवतां श्री तिरुमल तिरुपति देवस्थान धर्मकर्तृसंघसभ्यानां, तथा तत्कार्यनिर्वाहकाधिकारिणां श्री. चे. अन्नाराव महाशयानां, भूतपूर्वाध्यक्षपादानां श्री. प. वें. रामानुजस्वामिमहोदयानां, अद्यतनाध्यक्षाणां श्री. जी. चेन्नारेड्डि महाशयानां च सर्वथाऽहमधमर्णः ।

तथैव सव्याख्यानस्यास्य ग्रन्थस्य मुद्रणे महदुपकृतवतां सर्वेषां कृते हार्दा धन्यवादाः समर्प्यन्ते । अपि च प्रच्युतो भवेयं मदीयाद्धर्मात्, यदि विस्मरामि धन्यवादानर्पयितुं श्री तिरुमल तिरुपति देवस्थान मुद्रणालय कार्यकरेभ्यस्सौम्येभ्यः, विज्ञचूडामणये च तदधिपतये, येषां सम्पूर्णसहकारेणैवैवं सर्वाङ्गीणरमणीयोऽयं ग्रन्थो विमुद्रितो विराजते नितराम् ।

मानुष्यकसुलभेनानवधानेन निपतितान् दोषान्, निसर्गदयालवः सहृदयाः मर्षयेयुरिति, हंसक्षीरन्यायेन गुणमात्रास्वादनैकपरा भविष्यन्तीति च निश्चित्य तेषां विषये करिष्यमाणज्ञश्च भवामि ।

श्रीवेङ्कटेश्वर प्राच्य परिशोधनालयः
श्री सिंह(दुर्मुखि) चैत्र कृष्ण सप्तमी
बुधवासरः
२–५–१९५६.

इति
निवेदयिता
ति. कु. वें. न. सुदर्शनाचार्यः

श्रीरस्तु

श्रीमते वेङ्कटेशाय नमः

## आध्यात्मिकनाटकेऽस्मिन् श्रीमति यतिराजविजये अभिनेयानां पात्राणां पङ्क्तिः ।

—※—

## पुरुषाः

| नाम | अधिकारः | अङ्कः | पुटसंख्या |
|---|---|---|---|
| १. वेदमौलिः (वेदान्तः) | राजा | १,२,३,४,५,६. | ९,१७,३०,४८,६१,७८. |
| २. यतिराजः (रामानुजः) | मूलमन्त्री | १,२,४,५,६. | १०,२५ ४८ ६२,६७. |
| ३. धर्मः | अस्य अनुचरः | १,६. | ११,१५,८३. |
| ४. यामुनमुनिः | राज्ञः आप्तमित्रम् | ३,४,५. | ३०,४८,६४. |
| ५. पराङ्कुशः (श्रीशठकोपदिव्यसूरिः) | परमपूज्यः | ५, | ६९. |
| ६. सुदर्शनः (वात्स्यो वरदविष्णुः) | यतिराजस्य अन्तरङ्गशिष्यः | ५ (वि). | ६०. |
| ७. रङ्गप्रियः (वाधूलो दाशरथिः) | वैतालिकौ | ३, | ३५, |
| ८. प्रियरङ्गः (वात्स्यो वरदविष्णुः) | | | |
| ९. मायावादः (प्रधानप्रतिपक्षी) | महामन्त्री | २,३,५, | १७,३०,६२. |
| १०. शङ्करः (सन्यासी च) | अस्य सहायः | ५,६. | ६२,७०. |
| ११. भास्करः | मन्त्रिणौ | ३,५, | ३०,७४. |
| १२. यादवः | | ३,५, | ३०,७२. |
| १३. चार्वाकः | मन्त्रिणः | २, | १६. |
| १४. सौगतः | सहायौ | २, | १६ |
| १५. वेदविचारः (पूर्वमीमांसा) | राज्ञो वेदान्तस्य भ्राता | ६, | ८०. |

| नाम | अधिकारः | अङ्कः | पुटसंख्या |
|---|---|---|---|
| १६. इतिहासः | अस्य सहायौ | २,६. | २४.८०. |
| १७. पुराणम् | | ६, | ८०. |
| १८. सदूहः (तन्त्रपालः) | सेनापतिः | ५,६. | ६२,६५ ९० |
| १९. सुतर्कः | योध | ५,६. | ६५,७८. |
| २०. शब्दः | अनुचरः | ६, | ८३. |
| २१. प्रत्यक्षादीनि प्रमाणानि | सेवकाः | | |
| २२. जनकः | | ४ (वि), | ४६. |
| २३. कञ्चुकी | | ३,६. | ३५,७९. |
| २४. संन्यासी (विवरणकारः) | | ५, | ६० |
| २५ शुक्लपटः (वाचस्पतिः) | | ५, | ६०. |
| २६ वादसिंहः (यादवशिष्यः) | | ५, | ७३. |
| २७. भास्करशिष्यः | | ५. | ७४. |
| २८. दिव्यपुरुषः | | ५,६. | ७५, ०,५. |
| २९. नारदः | | १ (वि), | ७, |
| ३०. भरतः | | १ (वि), ६०. | ७,९६. |
| ३१. प्रतीहारी | | १,५. | ९,६९. |
| ३२. सूत्रधारः<br>३३. पारिपार्श्वकः (नटः) | प्रस्तावनाप्रवर्तकौ | १, (प्रस्ता). | २—६. |

## स्त्रियः

| | | | |
|---|---|---|---|
| ३४. सुमतिः (भगवद्भक्तिः) | पट्टमहिषी | ४,५,६. | ५२,६५,७८. |
| ३५. सुनीतिः | अस्याश्चेटी | २,४,५,६. | २५ ४०,५२,६५,७८. |
| ३६. मिथ्यादृष्टिः (मोहजननी) | वेश्या | २. | १८. |
| ३७. गीता | सुमत्याः सखी | ३ (प्र),४ (वि). | २९,४६,५२. |
| ३८. सद्विद्या | चामरग्राहिणी | ३ (प्र). | २९. |

* वि — विष्कम्भः ; प्र — प्रवेशकः ; प्रस्ता — प्रस्तावना ।

॥ श्रीरस्तु ॥

# इतरेषां आध्यात्मिकनाटकानां (Allegorical plays) पट्टिका

| नाटकनाम | कर्तृनाम | विशेषांशः |
| --- | --- | --- |
| (१) प्रबोधचन्द्रोदयः (१०५०-१११६ A. D.) | श्रीकृष्णमिश्रयतिः (१०९७-११६५ A. D कालिक ४७ कामकोटि-मठाधिपति समकालिकोऽयम्) | विष्णुपारम्यवाद्यद्वैतिमतप्रबोधनकरो ग्रन्थः ; एतदादर्शीकृत्यैव अन्यानि अध्यात्मिकनाटकानि प्रवृत्तानि सर्वाणि । |
| (२) सङ्कल्पसूर्योदयः | श्रीमद्वेदान्तदेशिकपादाः (१२६८-१३६९ A. D.) | श्रीविशिष्टाद्वैतमतप्रबोधनाय आरचितोऽयम् । |
| *(३) विजयरञ्जननाटकम् | श्रीबिन्दुमाधवतनूजः - इन्दिरेशकविः | श्रीद्वैतमतप्रबोधकम् । |

* नाटकमिदं, अस्मत्प्रियमित्रमहोदयैः सहृदयतल्लजैः श्रीवेङ्कटेश्वर संस्कृतमहाविद्याशालायां व्याकरणशास्त्रविभागस्य प्रधानोपाध्यायैः श्रीमुष्णाभिजनैर्व्याकरणशिरोमणिभिः श्रीमद्भिः राममूर्त्याचार्यैः सप्रीतिबहुमानं प्रादर्शि मह्यं प्रसन्नसङ्कल्या । तेषां सर्वदा कृतज्ञोऽस्मि ।

अत्र — योग्यता, सुचरित , जिज्ञासा, मुमुक्षा, प्रयत्न , परतीर्थः, गुरुप्रसादः, तत्त्वविवेकः, अचिन्त्यशक्तिः ( महिषी ), गुणोत्कर्षः ( सहचरः ), निदिध्यासनं, प्रसादः, कलिः, साम्बशिवः, चरितावेदी, शीघ्रगतिः, चाणक्यः, शकुनिः, कठोरः, मणिमान्, प्राणदासः, प्रभञ्जनरञ्जनः, प्रवेशकः, संकर ( शङ्करः), गोविन्दस्वामी, ब्रह्मदत्तः, मिथ्याप्रज्ञः, ज्ञानोत्तमः, प्रज्ञातीर्थः, सत्यप्रज्ञः, प्राज्ञतीर्थ , विचारः, विवेकः, आनन्दतीर्थः, भूरिकरुण , जनाः, उपक्रमादयः, वादिनः, अगातप्रत्ययः, प्रत्यक्षम्, मिथ्यात्वानुमितिः, व्यावहारिकी, विकल्पः, त्रिविक्रमाचार्यः, पुण्डरीकः, व्याघातः, प्रसादः, द्वेषः, अयोग्याः, योग्याः, संकल्पः (महामन्त्री), रमानाथः (महाराजः) — इत्येवमादयः आध्यात्मिकपदार्थाः पात्राणि ।

| नाटकनाम | | कर्तृनाम | विशेषांशः |
|---|---|---|---|
| (४) | अमृतोदयम् | गोकुलनाथः (१६१५ A. D.) | जीवात्मनः मोक्षोदयोऽत्र अभिवर्ण्यते । |
| (५) | मोहपराजयः | मोढ-यशप्पलः(१३०६ A.D.) | जैनमतप्रबोधकः |
| (६) | श्रीदामचरितम् | समरदीक्षितः(१६८१ A. D.) | श्रीकृष्णसखस्य सुदाम्नः दारिद्र्यनिवृत्तिः अभिवर्ण्यते । |
| (७) | धर्मविजयः | भूदेवशुक्लः (16th Cent. A. D.) | धर्मस्य विजयः अभिवर्ण्यते । |
| (८) | चित्तवृत्तिकल्याणम् जीवन्मुक्तिकल्याणं च | भूमिनाथः (नल्लादीक्षितः) १६८४-१७१० | अद्वैतमतप्रबोधके । |
| (९) | सौभाग्यमहोदयनाटकम् | जगन्नाथशीघ्रकविः (17th Cent. A. D.) | अलङ्कारा एव अत्र पात्राणि । |
| (१०) | विद्यापरिणयः (वेदकविकृतः) | आनन्दरायमखी (18th Cent. A. D ) | जीवात्मनः विद्यया परिणयः अभिवर्ण्यते । |

---

"कलि-शकुनिभ्यां प्रेरितो मणिमान्नाम दनुजः—शङ्कर (सङ्कर) भूमिकां प्राप्य, अविद्यापुरीसौभाग्यं संवर्ध्य, सर्वमिथ्यात्वं व्यवस्थाप्य विद्यापुरीतो राजानं सपरिवारं निष्कासयति, परतीर्थादीन् तपस्विनः अविद्यापुर्यां बन्धयति च । एवं काले गते बहुतिथे, बद्धेषु जातानुकम्पो भगवान् मुख्यप्राणो वायुः, आनन्दतीर्थमहोदयत्वेन अवतीर्णः, भेदसाम्राज्यं व्यवस्थाप्य, समीकृत्य अलङ्कृत्य च विद्यापुरीं, निरस्य शङ्करादीन् प्रतिपक्षिणः, सकलकल्याणगुणगणपरिपूर्णं श्रीलक्ष्मीपतिं महाराजं विद्यानगर्यां पुनः सम्यक् प्रतिष्ठापयति ; यस्य पुरुषोत्तमस्य द्वेषेण प्रतिसञ्चरे तमःकूटे निपातितेषु अयोग्येषु, प्रसादेन च योग्या निर्भरानन्दमनुभाव्यन्ते" इति, वेदान्तान्तरङ्गतत्त्वरहस्यं सुभगया प्रक्रियया समुपवर्ण्यते । अधिकमन्यत्र ।

| नाटकनाम | कर्तृनाम | विशेषांशः |
| --- | --- | --- |
| (११) पूर्णपुरुषार्थचन्द्रोदयः | जातदेवः (18th A. D.) | दशाश्वनः, आत्मनो वा आनन्दपक्ववल्ल्याश्च परिणयोऽत्राभिवर्ण्यते । |
| (१२) शिवलिङ्गसूर्योदयः | मल्लारि आराध्यः (18th A. D.) | वीरशैवमतप्रबोधकः । |
| (१३) अनुमितिपरिणयः | नरसिंहः (18th A D) | न्यायमतप्रबोधकः । |
| (१४) शुद्धसत्त्वम् | माडभूषि-वेङ्कटाचार्यः (१८६० A. D.) | विशिष्टाद्वैतमतानुरोधि । |
| (१५) चित्सूर्यालोकः | राणि-महाग्निचिन्नरसिंहकविः | अद्वैतवेदान्तानुयायी । |
| (१६) विद्वन्मनोरञ्जनी | चिरञ्जीवि भट्टाचार्यः (रामदेवः) | ,, |

इत्यादीनि अनेकानि नाटकानि वर्तन्ते । तान् सर्वानप्यधिकृत्य प्रत्येकशो विलिख्यते मया कश्चन व्यासः ।

---

श्रीः

# विषयानुक्रमणिका





श्रीरस्तु

श्रियः कान्ताय नमः

श्रीमते रामानुजाय नमः

## वेदान्तविलासापरनामधेयम्

# यतिराजविजयम्—नाटकम्



## नान्दी

पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
  नीले मुह्यति किं करोमि महितैः क्रीतोऽस्ति ते विभ्रमैः ।
इत्युत्स्वप्नवचो निशम्य सहधा निर्भर्त्सितो राधया
  कृष्णस्तत्परमेव तद्व्यपदिशन् क्रीडाविटः पातु वः ॥ १ ॥

किञ्च,

शय्या यस्य दृशा शृणोति [1]'भवति छन्दांसि'[2] यद्वाहनम्
  लीला यस्य जगन्ति कालकलनामूलं च यल्लोचनम् ।
निद्रा जाग्रत एव यस्य [3]निगमस्तोमोऽवतंसोत्पलम्
  देवः पुष्यतु रङ्गमङ्गलनिधिः श्रेयांसि भूयांसि नः । २ ॥

ब्रह्मत्राणप्रवीणो धृतधरणिभरः क्ष्मासमुत्क्षेपदक्षः
  प्रह्लादह्लादकारी मथितबलिबलो भग्नराजन्यजन्यः ।
[4]लङ्कालङ्कारहारी हलहतकलहो बल्लवोल्लासकारी
  भावी पाषण्डशत्रुः भवतु मधुरिपुः श्रेयसे भूयसे नः ॥ ३ ॥

---

1. मङ्गलछन्दांसि —पा०
2. छन्दोमयं वाहनम् —पा०
3. निगमस्तोमावतंसोत्पलम् —पा०
4. लङ्काऽहङ्कारहारी —पा०

नान्द्यन्ते सूत्रधारः

सूत्रधारः— भास्वानेष तमो निहन्ति सकलप्रह्लादकारी शशी
किं तावेव फलादिभिश्च तरवः किं नोपकुर्वन्ति नः ।
एवं वस्तु परोपकारि सकलं दृष्ट्वाऽपि नष्टाशयो
यस्स्वार्थैकपरो भवत्ययमहो दृष्टान्तशून्यो जनः ॥ ४ ॥

तथाप्येकाकी किं करोमि ? (विमृश्य, सहर्षम्) अथवा किं न करोमि ? अस्ति किल समस्तकलासु अद्वितीयः द्वितीयो मे देहः । (नेपथ्याभिमुखमवलोक्य,) मारिष ! परिषदि पौरुषं ते किं न दर्शयसि ?

नटः—(प्रविश्य)
उपकर्तुरात्मविद्यामनवद्यां भरतमुख्यमुनिहृद्याम् ।
तव चात्मलाभतुष्टः प्रत्युपकरवाणि भाव ! केनाहम् ॥ ५ ॥

सूत्र—मारिष ! किमन्यद्ब्रवीमि ।
सुर - नर - तिर्यक् - स्थावरदेहास्सर्वेऽपि नश्वरा एव ।
तत्क्षणमपि यदि जीवेत् जीवतु देही परोपकारेण ॥ ६ ॥

तत्त्वया सह महतीं नाटकधुरामुद्वहन्नात्मानं चरितार्थयामि ।

नटः—भाव ! तन्निवेद्यतां येनाहमपि चरितार्थो भवामि ।

सूत्र — सम्प्रति समसमयसम्पतदपरिमितनिगमकुलमणिमकुटनटमरीचिमञ्जरीरञ्जितचरणकमलस्य जगदुदयविभवलयलीलस्य कमलावनीकुचकलशकपोलनलयुगलयुगपदभिलिखितपत्रावलीपरितुष्टकरकिसलयचतुष्टयस्य [1] कावेरीतीरतरुणतमालभूरुहस्य विभीषणाराधितपादपङ्कजस्य भुजङ्गराजभोगपर्यङ्कशायिनः श्रीरङ्गराजस्य चैत्रोत्सवयात्रायाम्, आत्मविद्याविदग्धैः अनवरतनिरवद्यभरतविद्याविनोदैरार्यमिश्रैरादिष्टोऽस्मि ; यदुत, "अस्ति खलु भगवद्रामानुजमुनेः पूर्वाश्रमभागिनेयः श्रीवत्सकुलचूडामणिः अखिलपरदर्शनमदकर्शनः सुदर्शनो नाम ।

---

1. कावेरीमध्यमरकतमणिभूषणस्य —पा०

सन्कुर्वता संसदि शिष्यवर्गान् अनन्यलभ्यैरखिलैस्स्वचिह्नैः ।
श्रीभाष्यसिंहासनमात्मनीनम् यस्मै च दत्तं यतिशेखरेण ॥ ७ ॥

तस्य वेदान्तकूटस्थः पौत्रोऽभूद्वरदो गुरुः ।
श्रुतप्रकाशिकाद्याश्च ग्रन्था यच्छिष्यसम्पदः ॥ ८ ॥

तस्य पञ्चमः प्रपञ्चविदितवैदुष्यः काञ्चीपुरीवास्तव्यः श्रीघटिकाशतसुदर्शनाचार्यसूनुः श्रीवेदान्ताचार्य - रामानुजाचार्ययोः दर्शनस्थापनाचार्ययोः प्रसादभूमिर्वरदाचार्यो नाम कविः; तद्विरचितं 'नाटकमस्माकं श्रोत्रपदवीमानन्दयति ; तेन नेत्रपदवीमप्यानन्दयस्व " — इति ।

पारिपार्श्वकः (विचिन्त्य) तदभिनेतव्यमित्युक्तम्; भवतु नाम ; किं नाम नाटकस्य ?

सूत्र — (विमृश्य)

चित्रकूटतटे रामः चित्रसानौ चकार यत् ।
सीताललाटे तन्नाम स्वरसं सिद्धमेव तत ॥ ९ ॥

नटः— (विचार्य सहर्षम) ललाटे कृतं हरितालतिलकमेव; तस्य स्वैरैः "यतिराजविजय"मिति सिद्धमेव तन्नाम ।

सूत्र — साधु, सम्यक् प्राज्ञोऽसि ।

नटः तस्य तर्कशूरस्य निकामकर्कशा वाणी, सायंतनसमयसमुल्लसितमालतीमकरन्दपरिमलमुचि सहृदयजनहृदयानन्दकन्दसिरावेधिनि सारस्वतपरमसीम्नि[2] नाटकमहिम्नि कथमिव पदमाधातुमर्हति ?

सूत्र — (विहस्य) मारिष ! मैवमाशङ्कनीयम् ।

शास्त्रेषु शस्त्रपरुषा अपि नाट्यमार्गे
कर्णामृतानि च भवन्ति कवीन्द्रवाचः ।

---

1. तद्विरचितं " वेदान्तविलसं " नाम नाटकम् —पा०

2. मारस्वतचरमसीम्नि -पा०

दैत्येन्द्रशैलकुलिशं दयितानितम्बे[1]
नाथस्य कोमल[2]मुदाहरणं नखं नः ॥ १० ॥

नटः— साधु निदर्शितं भावेन ।

नावेक्षिष्ट स दुष्टधीर्नरहरिर्भिन्दन् क्षिपन्तं नखैः
चक्रं तच्चटुलस्फुलिङ्गकलिकाचक्रं नृचक्रं च तत् ।
रिङ्गत्तुङ्गशताङ्गसङ्घनिबिडासंख्यातसङ्ख्यान्तर-
ख्यातोच्चचण्डिमघोरडिण्डिममिलच्छुण्डालघण्टारवम् ॥ ११ ॥

( सविनयमञ्जलिं बध्वा )

वाञ्छां ते परिपूरयन्तु वदने कण्ठीरवस्य प्रभोः
वैकुण्ठस्य विदारितारिविगलद्रक्तानुषक्ता नखाः ।
वक्षःपीठविशालशैलकटककीडाकिरातीभव-
ल्लक्ष्मीकिंशुककर्णपूरकलिकालङ्कारशङ्काकराः ॥ १२ ॥

सूत्र— ( सानन्दम् )

शास्त्राणामधिदेवताश्च निपुणाः पात्राणि रङ्गोऽप्ययं
रङ्गो यत्र स विश्वनाटकगुरु[3]र्जागर्ति निद्रां विना ।
सभ्या भावरसानुभूतिचतुरास्सर्वेऽभिनेये वयं
सर्वं सिद्ध्यति वेदमौलिचरिते तन्नाट्यविद्याफलम् ॥ १३ ॥

नटः—( विचिन्त्य ) वस्तुनस्तावद्दुल्लोकतया, रङ्गस्य कथं प्रियो भविष्यसि ? इति पर्याकुलोऽस्मि ।

सूत्र— मारिष ! मैवं पर्याकुलो भव । पश्य,

सुरनरपशुभूमिकां प्राप्य तत्तद्दशामद्भुताम
अभिनयनिपुणोऽयमध्यक्षयन् प्रेक्षकाणां सताम् ।

---

1. दयिताकपोले —पा०
2. नाथस्य भूषणम् —पा०
3. शेते पुराणो युवा —पा०

विहरति भरतप्रियस्थायिसञ्चारिभावेषु तत्र
मधुरिपुरथवाऽहमेवापरो नास्ति रङ्गप्रियः ॥ १४ ॥

किञ्च,

त्रिगुणीकृताऽपि मुग्धैः सदसि[1] गुणग्राहिभिस्तज्ज्ञैः ।
मुक्तावलीव हृद्या सम्यक् सन्धीयते विद्या ॥ १५ ॥

तद्भवता पात्रवादित्राणि सज्जीक्रियन्ताम् । किन्तु, दैवतारूपत्वात्पात्राणा-मस्मिन्नप्राकृते नाटके किमप्यसंस्कारपरिपूतनर्तनपात्रीकरणं किञ्चित्किल्बिषमेव । अहं च ब्रह्मसूत्री भरतोऽस्मि, तदप्रमत्तानि पात्राणि स्वीकर्तव्यानि ।
( विचिन्त्य )

आलोलस्तनभारहारमलघुश्रोणीरणन्मेखलं
हस्तेनाकुलकङ्कणेन मरुतामव्याजदत्तामृतम् ।
साकूतस्मितमीक्षितं कमलया सञ्जातपुम्भावया
नारीरूपमिदं तनोतु कुशलं नारायणस्य[2] प्रभोः ॥ १६ ॥

तन्नाट्यावसरे दृष्टाऽसि । परिषदं तावत्प्रसादयामि ।
(इति परिवृत्य अवलोक्य, साञ्जलिबन्धम् )

नीतो मयाऽद्य निगमान्तमदद्विपोऽयं
रङ्गस्थलं रचितनाटकसंविधानम् ।
नृत्यन्निरङ्कुशगतिर्निजसूत्रमार्गे
किञ्चिद्यदि स्खलति सह्यमिदं सदस्यैः ॥ १७ ॥

( समन्तादवलोक्य )

सरलबकुलाभिरामः श्रुतिमधुनिष्पन्दिशुकमुखालापः ।
वहति हरितत्त्वमुच्चैः शाखाकोटिषु महागमस्तोमः ॥ १८ ॥

तावदमुमेव तीर्थीकृत्य माधवसमयं निरूपयामि । ( विलोक्य, सानन्दम् )

---

1. गुणग्रहणलम्पटैस्तज्ज्ञैः --पा०
2. नारायणस्याद्भुतम् --पा०

सुरभिसुमनःप्रबन्धाः श्रुतिसुखमधुपषट्पदालापाः ।
माधवसमयविलासा मदयन्ति मनांसि किं पुनस्सुदृशाम् ॥ १९ ॥

नट.— वसन्तलक्ष्मीलाक्षाङ्कमुद्रा इव द्रुमैः ।
पूजिताः पुष्पसन्दोहैः भ्रियन्ते मूर्ध्नि पल्लवाः ॥ २० ॥

(इति निष्क्रान्तः)

सूत्र — (पुरोऽवलोक्य, सहर्षम)

त्रिभुवनमहनीयस्ते जमामेकराशिः
निजनिजमतिसिद्धं निह्नुवानं प्रपञ्चम् ।
परिमुषितविवेकं स्फारमप्यन्धकारं
विघटयति मयूखैः वेदरूपो विवस्वान ॥ २१ ॥

(नेपथ्ये)

साधु, भरतपुत्र! सत्यवचनो भव; त्वद्वचनमस्माकमुपश्रुतिरपि साक्षाच्छ्रुतिरेव; यदिदानीम्.

सर्वैर्विलुप्तविषयः [1]सचिवैः पुरस्तात
सम्यग्विचिन्त्य सचिवेन यतीश्वरेण ।
सम्प्रापितः स्वपदवैभवमद्वितीयं
सम्राडसौ खलु भविष्यति वेदमौलिः ॥ २२ ॥

सूत्र—(श्रुत्वा, सहर्षम्) अहमप्यमुना सम्भूय तदेवानुसन्धास्यामि ।

(इति निष्क्रान्तः)

इति प्रस्तावना ।



1. समयैः —पा॰

# प्रथमोऽङ्कः

( ततः प्रविशति नारदो भरतश्च )

नारदः—"सर्वैर्विलुप्तविषयः ...." ( इति पुनस्तदेव पठति )

भरतः—सर्वङ्कषो हि महिमातिशयो यतिराजस्य, यदयमेवं विधास्यति ।

नारदः— किमत्राश्चर्यम् ?

निरस्य तिमिरं भानुः निधत्ते जगति श्रियम् ।
एवमेनं यतीन्द्रोऽपि स्वपदे स्थापयिष्यति ॥ २३ ॥

भरतः—भगवन् ! अनभिज्ञतया निदानमस्य वेदितुमिच्छामि ।

नारदः – देवरहस्यमिदम् ; सात्त्विकादन्यत्र रक्षणमर्हति ।

मायाविमोहितसुरानसुरानलावीद्
येनाच्युतस्स कुहनासमयैर्मनुष्यान् ।
सम्मोहयत्सु पुनरेषु सुदर्शनोऽपि
तानेव जेतुमधुना यतिशेखरोऽभूत् ॥ २४ ॥

तदस्य सर्वमीषत्करमवधारय ।

भरतः— सहर्षम) तर्हि जितं महाराजेन ।

नारदः—( विचिन्त्य, सबहुमानम )

सर्वस्यापि हितं ब्रवीति समयाचारान् करोति स्थिरान्
मायाजीवपरानयं न सहते मानप्रतापोन्नतः ।
सम्मान्यस्सकलासु नीतिषु महासत्त्वः स्थिराङ्को युवा
तस्मान्नेतृषु वेदमौलिसदृशो नान्योऽस्ति कश्चिन्नृपः ॥ २५

तथाप्येनमन्ये परिभवितुमीहन्ते–इति महदाश्चर्यम् ।

नारदः किमत्राश्चर्यम् ? परिभूता एव महाराजविषयाः परसमयनासीरैः ।

भरतः—( सभयकौतुकम् ) किं मूलमेतेषां सम्भूय समुत्थानस्य ।

नारदः—वत्स ! साधु पृष्टं भवता । सन्ति खलु महाराजस्य प्रत्यक्षादयो महामात्याः ।

भरतः—सन्त्येव ; येष्वेव प्रमाणबुद्धिर्महाराजस्य ।

नारदः—तत्कुलीना दुर्मतयः केचिदभासाः । तैरेव विकलाङ्गतया निरस्ताः प्रत्यन्तवासिनः पाषण्डसमयानाश्रिताः । ते च, तैः प्रोत्साहिताः, तानेव तीर्थीकृत्य दुर्विनीता महाराजविषयं व्याकुलयन्ति ।

भरतः (सोद्वेगम्)

अल्पोऽपि रिपुराक्रमन् असह्यः खलु मानिनाम् ।
नेत्रे परागलेशोऽपि निपतन् कुरुते रुजम् ॥ २६ ॥

ततः किं प्रतिपन्नं देवेन ?

नारदः—(सनिर्वेदम्) किमन्यत्प्रतिपद्यते ? इदं प्रतिपन्नम् । ततस्तेभ्यः परप्रतारणनिपुणमतिः कश्चिदागत्य मायावी विरचितविरक्तवेषो वैदिकप्रथामुत्पाद्य क्रमेण मन्त्रिपदमवलम्ब्य महाराजमलीकरुचिमकरोत् । स्वामिशीलमनुवर्तमानैरितिहासपुराणैश्च तथैव प्रतिपन्नम् ।

भरतः (सभयनिर्वेदम्) हा ! कष्टमापतितम् ! कथमन्धकूपे निपतितो जीवलोकः ?

परिभवति हि भानुं पावकं वाऽन्धकारः
भवति च परिभूतः पामरैज्ञ नराज्ञिः ।
कलिकलुषमतीनां का गतिर्मानवानां
भवजलधिगतानां पारलाभः कथं वा ॥ २७ ॥

नारदः—वत्स ! मा भैषीः । प्रकृतिनिर्मले स्फटिकमणौ परकृतोपरागः कियच्चिरं तिष्ठति ? पश्य,

पौलस्त्येन यथा पुरा रघुपतिर्मायाविना वञ्चितः
भूयस्तं विनिहत्य शङ्करगिरिः स्फूर्जत्प्रतापोन्नतम् ।
स्वामी नः श्रुतिमौलिरेष विजयी रामानुजस्यौजसा
साम्राज्यं भरतादिभोग्यविभवं सत्यं तथा धास्यति ॥ २८ ॥

भरतः—(सप्रश्रयम्) सत्यमस्तु ; भरतोऽस्मीति ममाप्ययमाशीर्वादः ।

नारदः सर्वमिह श्वेतद्वीपवासिभ्यो निवेदयावः । (इति निष्क्रान्तौ)

इति विष्कम्भः ।

(ततः प्रविशति राजा)

राजा—(विमृश्य) सम्प्रति, मन्त्री मायावादः समयान्तरमदहरणशुण्डीरः; तथाऽपि,

मानार्थतत्त्वहीनो [1]मायाजीवी महामृषावादी ।
सुमतिसुनीतिद्वेषी (निश्वस्य, सखेदम्)
मामप्येवं करोति किं कुर्मः ॥ २९ ॥

(विमृशन्, विहस्य)

भेदोपजीव्यपि भिनत्ति तमेव भेदं
[2]मानं प्रतिक्षिपति मानपरायणोऽपि ।
सोऽयं प्रमाणपुरुषैः स्वकरोपनीतान्
मिथ्येति वक्ति मिषतोऽपि हरन्[3]महार्थान् ॥ ३० ॥

तदत्र किं प्रतिविधेयम्? (विचिन्त्य) तावदयमनुसरणीय एव, यावदस्मदनुकूलोऽन्यो नीतिशाली कश्चित्तत्पदे निवेशितस्स्यात्; अन्यथा, मामरातयो जीवग्राहं गृह्णीयुः ।

प्रतीहारी—(प्रविश्य) देव! महामात्यो मन्त्रशालायां युष्मदागमनमाकाङ्क्ष्य तिष्ठति । भास्करयादवौ च तथैव ।

राजा—(विचिन्त्य) अथवा, सम्प्रति किं विचारेण? सर्वमिदं प्रागेव प्रियसुहृदा यामुनेन सूचितमेव । इदानीमयमनुसरणीय एव । (पुरोऽवलोक्य),

त्रिदण्डकाषायशिखोपवीतैः
प्रसादयन् पारमहंसलक्ष्मीम् ।
वैकुण्ठमारोपयितुं मुमुक्षून्
सोपानकारी यतिराज एषः ॥ ३१ ॥

(इति निष्क्रान्तः)

1. मायावादः—पा०
2. मानानि दूषयति मानपरायणोऽपि—पा०
3. ममार्थान्—पा०

(ततः प्रविशति रामानुजः)

रामानुजः—(सखेदम्)

वासो मुक्तपटच्चराणि वसतिर्मूले तरोर्भोजनं
भिक्षा[1]स्सुस्त नवा जलं तु सुलभं त्यक्तास्समस्तैषणाः ।
वर्गेषु त्रिषु निस्स्पृहो भगवति न्यस्तात्मभारोऽपि सन्
चिन्तादन्तुरमानसोऽस्मि सचिवश्रीवेदमौलेरहम् ॥ ३२ ॥

यद्यहम् 'आत्मारामस्य मे किमेभिर्मनोव्याक्षेपै'रिति मौनमास्थितस्स्याम्; तदा कुमतिसमयैरपहृतविषयो वेदमौलिः क्व पदमादध्यात्? ततस्तदनुसारिणी परमपुरुषार्थकथा धर्मकथा च न क्वचित्तिष्ठतीति सकलजीवलोकसन्तापस्स्यात्। तस्मादनेकजीवलोकसन्तापादेकसन्तापो वरमित्यसदुद्योग एव श्रेयान् ।

(स्पर्शमभिनीय, सानन्दम्)

मदन्तस्संतापं शमयितुमलं रङ्गनगरी-
समीराः कावेरीशिशिरलहरीशीकरमुचः ।
समुत्पुष्यल्लक्ष्मीस्तनतटपटीरद्रवमिलन्-
मुकुन्दोरःक्रीडारसिकतुलसीसौरभमुषः ॥ ३३ ॥

(परितोऽवलोक्य) न कश्चिद्राजकुलादभ्येति । अस्माभिः प्रहितो धर्मश्च विलम्बते ।

(ततः प्रविशति धर्मः)

धर्मः—(पुरोऽवलोक्य) अहो! अतिरमणीयमिदमुद्यानम् । अत्र हि,

फलकुसुमविनम्रपार्श्वशाखो मुनिजनसेवितमूलवेदिबन्धः ।
रमयति हृदयं रसालपोतो मधुकरगीतमनोज्ञकूणलीलः ॥ ३४ ॥

(पुरोऽवलोक्य, सविनयमञ्जलिं बध्वा) स एष खलु सकलपाषण्ड-तिमिरषण्डचण्डकरः चरमाश्रमरूपी परमकारुणिको भगवदवतारः ।

---

4. पञ्च नवा—पा०

तथाहि—

स एष साक्षात्कृतकृष्णदत्तां निक्षेपविद्यां निरवद्यभूमौ ।
गद्यात्मना कृष्णजनोपभोग्यां संवादरूपां विदधे दयालुः ॥ ३५ ॥

(स्मृतिमभिनीय) अस्ति खल्वेवमितिहासश्च । यदुत,

काणादशाक्यपाषण्डैः त्रयीधर्मो विलोपितः ।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ ३६ ॥

इदानीमपि स एवायं स्यात् । अश्रद्दधानोऽपि दिव्यशक्त्यन्यथानुपपत्त्या स एवायमिति निश्चिनुयात् ।

यतिराजः— (विमृश्य)

सा विद्या नैव हृद्या रमयितुमधुना या न विद्यादविद्या-
विध्वस्तान्तस्समस्तान्न भवति यदि वा सम्मतं कर्म तन्न[1] ।
संसारे वीतसारे क्षिपति यदवशं चिन्तया किं तया वा
या निष्णाता न पुष्णात्युदयमुपनिषत्सञ्चरिष्णौ च विष्णौ ॥ ३७ ॥

(पुरोऽवलोक्य, सहर्षम्)

हितस्य करणान्नित्यमहितेभ्यो [1]निवारणात् ।
मातुरप्यधिको बन्धुः प्राप्तो धर्मोऽयमात्मनाम् ॥ ३८ ॥

धर्मः— (उपसृत्य) अयमहमुपनतोऽस्मि ।

यति— (सादरम्) धर्म ! इदमासनमुपविश्यताम् ।

धर्मः— भगवन् ! अलमत्यादरेण । (इति भूमावुपविशति)

यति— अपि दृष्टो राजा वत्सेन ?

धर्मः— (सविषादम्) राहुगृहीतो रजनीकरः कथं दृश्यते

यति— कोऽसौ पाप एवमाचरति । (विचिन्त्य, स्मितं कृत्वा) मायावादवशवर्ती न दृष्टः किं नरपतिः ?

1. निवर्तनात् —पा०

धर्मः— न केवलमेतावत् ।

यति — किं मन्यत् ?

धर्मः — राजद्वारे कैश्चिन्मुण्डितैरेकदण्डिभिर्निरनुक्रोशैराक्रोशन्नेव ताडितोऽहमागतोऽस्मि ।

यति — (सदयं पाणिना परामृशन्) वत्स ! किं तान् प्रत्यभिजानासि ?

धर्मः— कथं न जानामि ? कतिपयवत्सरानस्मद्भृत्या एव हि ते ।

किञ्च,

येनैव[1] कण्ठपाशेन यज्ञदानादिकर्मसु ।
प्रगृह्य पशुवन्नीता वयं तद् गृह्यतामिति ॥ ३९ ॥

तैरेवाच्छिद्य गर्ते निक्षिप्तं यज्ञोपवीतं मे दर्शितम् ।

यति —(विहस्य) सम्प्रत्येव हि ते पशवः, यत्सर्वाश्रमजीवनं ब्रह्मसूत्रं परित्यजन्ति । (विचिन्त्य)

नापरैः परिभूयन्ते नद्यरण्यं पुमानपि ।
तं विना धीरसत्त्वैस्तैः चिरं परिचिनोति यः ॥ ४० ॥

एवं धर्मद्रुहः खलु यतीनिन्द्रः सालावृकेभ्यः प्रयच्छति । वत्स ! विषादस्त्यज्यताम् । सम्प्रति सकलदुरवगाहे राजकुले लब्धावकाशोऽस्मि । किञ्चित् क्षम्यताम् । धूर्तसचिवनिर्धूतं राजकुलं यथाऽवस्थितं करोमि । सत्यमेवैतदवधारय ।

धर्मः—(सपरितोषम्) राम इव रामानुजस्त्वमपि सत्यवचनो भविष्यसि । किन्तु, यावदस्य [2]स्वरूपसत्ताऽपि पादमात्रेण विषसक्तवन्न लुप्येत, तावदुद्योगः क्रियताम् ।

यति —वत्स ! मा भैषीः ।

---

1. येन वकुण्ठपाशेन —पा॰
2. व्यावहारिकसत्ताऽपि — पा॰

धर्मः—( समन्तादवलोक्य, सानन्दम् )

वाचा रञ्जयितुं जगत् व्यवसितं वाचंयमैः कोकिलैः
मन्दं वाति समीरणोऽपि पुलकोद्भेदानुमेयागमः ।
निश्शेषच्युतपत्रसञ्चयतया निष्प्राणकल्पं वनं
भूयोऽप्युन्मिषतीव दृष्टिसुलभैः पुष्पप्रवालोद्गमैः ॥ ४१ ॥

यति — सुखशीतलास्समीराः श्रुतिमधुरा बालकोकिलालापाः ।
तरवोऽपि पुष्पसुभगा माधवसमयो[1]न कस्य बहुमान्यः ॥ ४२ ॥

धर्मः—( स्वगतम् ) विष्णुसमयश्रियमाकाङ्क्षतो मे यतिराजवचनं मङ्गलं सूचयति । ( पुरः पश्यन्, प्रकाशम् ) सर्वङ्कषप्रतापा खल्वियं वैष्णवी वेला, यदिदानीम्,

क्रूरदृष्टिभिश्शिवोलूकमूर्खैश्श्रुतिकटूक्तिभिः ।
तेजसा दुर्निरीक्षोऽयं वैष्णवस्समयोऽभिजित ॥ ४३ ॥

किञ्च,

छाया मूलमुपैति पान्थवदियं श्रान्ताऽऽतपाद् भूरुहाम्
मज्जत्यम्भसि भास्करः प्रतिफलन्मध्याह्नतापादिव ।
आशामात्रमपि क्वचिन्न मरुतामामूलमुष्णं जलम्
मन्ये सम्प्रति मध्यमेन महता भूतेन सृष्टं जगत् ॥ ४४ ॥

यति —साधु, सम्यगुत्प्रेक्षितम् । विष्णुपदे दीयतां दृष्टिः ।

मूर्त्या मध्यमया कयाऽपि भरितं मूर्छन्मुरद्वेषया
तेजस्तत्पदमध्य एव विकिरं स्तीव्राभिरामं करैः ।
मध्यस्थः परितो निपीतमधुभिर्भास्वानुपास्यस्सुरैः
माद्यन्मध्यमवेदगन्धसुभगो मध्येदिनं दीप्यते ॥ ४५ ॥

1. माधवसमये न कस्य बहुमानः– पा०

(विचिन्त्य)

जगच्चक्षुरिदं ज्योतिरनञ्जनमनामयम् ।
वैष्णवैरेव तेजोभिः वर्धते दीप्ततारकम् ॥ ४६ ॥

धर्मः— अन्यथा, कथमीदृशोऽनुभावस्स्यात् ?

यति — परमव्योमक्षीरसागरादिवदिदमपि परमपुरुषस्य विशेषसन्निधानस्थानम् ।

उन्नामधेयमुत्फुल्लपुण्डरीकविलोचनम् ।
पश्यन्ति हि परं ज्योतिः केचिदत्र हिरण्मयम् ॥ ४७ ॥

(विचिन्त्य, सानन्दम्) सोऽयमभिजिन्नाममुहूर्तः सर्वविजयावह इति ज्योतिर्विद आमनन्ति । तदत्रास्माभिरुद्योगः कार्यः । (विचिन्त्य) कुतस्ते भ्राता प्रवृत्तिवल्लभो धर्मः ?

धर्मः— प्रवृत्तिपरतन्त्रः तत्प्रियेण वेदविचारेण बहुमन्यमानः तत्पार्श्वे तिष्ठति ।

यति — किमसौ भवत्सौभ्रात्रमनुतिष्ठति ? तन्मुखेन वेदविचारवृत्तान्तं वेदितुमिच्छामि ।

धर्मः— किमत्र विचारेण ? तत्त्वतो निरूपणे स एवाहमस्मि; किन्तु, सर्वलोकविप्रलम्भचतुरया मत्प्रियां निवृत्तिं प्रति बद्धवैरया प्रवृत्त्या कलुषितहृदयो मदन्य इव वर्तते, तन्मुखेन विदितश्च मया वेदविचारवृत्तान्तः ।

यति — (सादरम्) तर्हि वत्स ! कथ्यताम् ।

धर्मः— चार्वाकेणाभियुक्त एव ।

यति — (सभयकौतुकम्) कथमेतद्भविष्यति ? अथवा, किमन्यद्भविष्यति ? उत्तिष्ठमानं चार्वाकं प्रकृत्या वेदविरोधिनौ मायावादसौगतौ दिगम्बरश्चानुवर्तेरन्; तैरभियुज्यमानं वेदविचारं मात्रया वेदानुरोधिनोऽपि तत्कृतबहुविरोधमनुस्मरन्तः कपिलपतञ्जलिकणभक्षाक्षचरणसमया उपेक्षेरन्, एवं सत्यास्मनिरपेक्षमुपर्युपरि निपत्य निशितनिस्त्रिंशनिष्ठुरैस्तर्कैः खण्डयतस्तर्कशूरान् स्वाङ्गमात्रशेषः किं करिष्यति वेदविचारस्तपस्वी ?

धर्मः—(सभयोत्कम्पम्) भगवन्! तथा सति धर्मकथैव लुप्येत ।

यती (करेण शिरसि संस्पृश्य) मैवं शङ्कितोऽभूः । त्वन्निमित्तमेव वेदमपि पुण्डरीकाक्षो रक्षिष्यति । पूर्वमपि,

वेदानादाय धातुर्मुखकमलगतान् सोमकं सागरान्त-
र्मग्नं हुंकारमात्रप्रशमितसकलब्रह्मरुद्रानुभावम् ।
हत्वा तद्रक्तसिन्धौ महति मधुरिपुः कच्छवत्पुच्छघातैः
तुच्छीकुर्वन्नतुच्छैर्जलनिधिमकरोदुत्सुको मत्स्यलीलाम् ॥ ४८॥

एवमन्यान्यपि भगवतश्चेष्टितानि भवन्निमित्तान्येव । किञ्च,

निशातनिस्त्रिंशकठोरधारैर्विलूय वेदप्रतिकूलमूहैः ।
महोत्सवो विष्णुपदाश्रितानां मया विधेयो महतां जनानाम् ॥ ४९ ॥

(इति धर्मेण सह निष्क्रान्तः)

इति श्रीवत्सकुलतिलक - श्रीसुदर्शनाचार्यतनूभव-घटिकाशत-
श्रीमद्वरदाचार्यकृतौ "वेदान्तविलास" अपर-
नाम्नि "यतिराजविजये" प्रथमोऽङ्कः ॥

---

# द्वितीयोऽङ्कः



( ततः प्रविशति चार्वाकः )

भुङ्क्ते वेत्ति च देह एव समहाभूतानि तेष्वेव धीः
किण्वादौ मदशक्तिवत् क्रतुफलम् भोक्ता न कोऽपि स्थितः ।
दग्धः किं पुनरभ्युपैति नियमो न क्वापि जीवेत्सुखं
यावज्जीवति दैवतम् नरपतिः न्यायो बलं केवलम् ॥ १ ॥

एवं सत्यपि लोको मुह्यति ; भवतु पश्यामः । सौगतस्समागच्छतु ।

( ततः प्रविशति सौगतः )

चार्वा—( सहर्षम् ) स्वागतं प्रियसुहृदे, भात्रे च । कार्यं चिन्त्यताम् । केचिदत्र विप्रलम्भकाः, 'वेद' इति धूर्तप्रलपितमवलम्ब्य, सुखचारिणो मनुष्यान् कृच्छ्रचान्द्रायण-मासोपवास-यज्ञादिमहादुःखेषु निपात्य, तत्सर्वस्वमपहरन्ति तत्र मायामोहसम्भूतैरस्माभिः, मिथो विरोधे सत्यपि, सम्भूय समुत्थानं कर्तव्यम् । तत्र प्रथमं मित्रभेदः कर्तव्यः । मया च वरयुवति - चन्दन - कुसुम - कुंकुम - कर्पूर मृगमद - मृदुवसन - भूषण - शयनादिभिः विप्रलब्धाः वेदविचारमन्त्रिणो बहुनियमक्लुशाः, निरतिशयसुखस्वरूपेषु तेष्वेव स्वर्गबुद्धिं कृत्वा, स्वर्गापवर्गशतमखसर्वेश्वरादिषु निस्पृहतया तत्प्रतिपादकमन्त्रार्थवादरूपे वेदे प्रमाणबुद्धिं त्याजिताः ।

सौग— साधु, सखे ! साधु । बृहस्पतिमते तिष्ठन् बृहस्पतेरप्यधिकोऽसि । विधिरूपो वेदः किंचिदेव ।

चार्वा—तत्त्वनिरूपणे तेषां [1]विध्यनुष्ठानमपि केवलम् जीवकैव । किन्तु, वेदमौठिपार्श्ववर्तिनम् मायावादं प्रति शङ्कितोऽस्मि ।

---

1. सिद्ध्यनुष्ठानमपि —पा०

सौग — किमत्र शङ्कया? सोऽहं, अहं वा स एव; वेदमौळिरपि तेन स्वकीये पथि निपातितो मिथ्याभूतविविधविषयसम्पत्परमार्थतत्त्वविषयमपि विज्ञानमात्रमेव सविषयं मन्यमानस्तिष्ठति ।

चार्वा — (सहर्षम्) परमार्थतो निर्विषयोऽयमुन्मूलनीय एव । भवतु, पश्चात् पश्यामः । सम्प्रति, मायावादमुखेन भवता वेदविचारं प्रति वेदमौळेः विरोधः कार्यः ।

सौग — सखे! सर्वमिदमनुष्ठितमेव अवधारय । (इति तेन सह निष्क्रान्तः)

(इति विष्कम्भः)

(ततः प्रविशति राजा मन्त्री च)

मायावादः— मय्येव राज्यमखिलं विनिवेश्य राजन्!
[1]विस्रब्धमेव विहरस्यवधूतकृत्यः ।
राज्यं मया च हतकण्टकमेतदासीत्
किन्तु स्फुरत्यहिभयं मम दुर्निवारम् ॥ २ ॥

राजा— किमेतत्?

मन्त्री — राजहृदयमजानन् कथं विज्ञापयामि?

राजा— चिकित्सक इवामात्यः प्रियमप्यहितं त्यजेत् ।
बलादपि हितं कुर्यादिति नीतिर्महीभृताम् ॥

मन्त्री— देव! भेदप्रसङ्गरहितं तव राज्यमेतत्
भ्राता भिनत्ति बहुधा विहितात्मभेदः ।
प्रायश्च सोदरत एव भयं नृपाणां
दृष्टं च तद्भवति वालिनि रावणे च ॥ ३ ॥

1. आनन्दमात्ररसिकोऽस्यवधूतकृत्यः, भोगेषु रज्यति भवान् भुवनैकवीरः—पा०

राजा—(विचिन्त्य) किमेष वेदविचार एव ?

मन्त्री—कोऽन्य एवमाचरति ? (विमृश्य) देव ! न केवलमेतावत् ।

राजा—किमन्यत् ?

मन्त्री—(तूष्णीमधोमुखस्तिष्ठति)

राजा—वक्तव्ये सति किं भयेन ?

मन्त्री—किञ्चिल्लोकायतिकोपसृष्ट इव लक्ष्यते ।

राजा—(सभयम्) कथमेतत् ?

मन्त्री—यदिदानीम्; शब्दैकशेषवपुषस्सकलाश्च वेदाः
विश्वं निरीश्वरमिदं न परे च लोकाः ।
कर्मैव सर्वफलदं कृषिवन्नराणा-
मित्यादि चिन्तयति वेदविचार एषः ॥ ४ ॥

राजा—(कर्णौ पिधाय) शान्तं पापम्, शान्तं पापम् । धर्मपरोऽप्ययं इतिहास-पुराण - वेदसिद्ध - सर्वकर्माराध्य - तत्फलप्रद - तद्देवताविशेष - तदन्तर्यामि - सर्वेश्वरादिकमनङ्गीकुर्वन्नर्धचार्वाक एव । सर्वात्मनाऽथायमुन्मूलनीय एव ।

मन्त्री—(स्वगतम्) सिद्धं नस्समीहितम् । तावदेनं मिथ्यादृष्टिविलासमोहितं कृत्वा विषयान् अमुष्याऽपलप्य अनुभवामः ।

(प्रकाशम्) देव ! निर्विशेषविज्ञानव्यतिरिक्तमखिलमिदमैश्वर्यं मिथ्येति जानासि; तदनेन चिदानन्दानुभवपरस्य ते न किञ्चित् कार्यमस्ति । तथापि, मायाविलासिनीविलासानवलोकयन् विहरस्व ।

(ततः प्रविशति मिथ्यादृष्टिः)

मिथ्यादृष्टिः—(पुरोऽवलोक्य सकौतुकम्) पित्रा मे मायावादेन सह सल्लपन्महाराजस्तिष्ठति । तावदेनम् उपसर्पामि । (विमृश्य) अभिनवस्यास्य हृदयमजानती कथमुपसर्पामि । यद्वा,

बालो वा यदि वा जरन्नपि युवा तिष्ठत्वयं रागवान्,
स्त्रीमात्रेऽपि लगत्ययं यदि मया स्पृश्येत किंचित्क्वचित् ।
कृत्याकृत्यविधिं विधूय गतिमप्यन्यामजानन् सदा
मय्येवार्पितमानसो न गणयत्यप्यागतामुर्वशीम् ॥ ५ ॥

(विमृश्य) सापि मयाऽनुभूय दत्तान् मदनुज्ञया अनुभवति । मुक्तिरपि कैवल्यवन्मया भुक्तोज्झिता ननु भवति ?

राजा—(पुरोऽवलोक्य सपरितोषम्) हा किमेतत् ?

मामन्यथा विदधती मधुरैरपाङ्गैः
मायेव काऽपि ललिता मकरध्वजस्य ।
अङ्गैरनन्यसदृशैरपरोक्षयन्ती
शृङ्गारतत्त्वमुपयाति सरोरुहाक्षी ॥ ६ ॥

मन्त्री—(स्वगतम्) विरक्तोऽपि सम्यगनया वशीकृतो भवति ।

(प्रकाशम्) देव ! भुवनत्रयमोहनप्रगल्भमेतत् प्रमदारत्नं महाराजमेव सेवितुमर्हति । देवेन च दृष्टमस्या लावण्यम् । किञ्च,

संगीते द्रवतां नयत्यपि शिलां वादित्रविद्यासु चेत्,
गन्धर्वेष्वपि कोऽपि नेदृशगुणो लास्ये तु गौरी स्वयम् ।
निर्द्वन्द्वा नृपनीतिवर्त्मनि जगत्यद्वैतवैदूष्यभूः
दक्षा कामकलासु देव ! भवतो देवीपदं चार्हति ॥ ७ ॥

राजा—(सबहुमानं, करमवलम्ब्य, सानुरागमासनार्धे निवेशयति)

मन्त्री—(स्वगतम्) वार्यां (?) निपातितो वारणपतिः । (प्रकाशम्) देव ! सुखफलान्येव राज्यानीति पुरन्दर-पुरूरवःप्रभृतिषु दृष्टमेव देवेन । तदियं वेश्येति नोपेक्षामर्हति । न हि कस्यापि रत्नभूतस्य दोषोऽस्ति । अत एव हि पुण्यशीलः पुरूरवा वेश्यामप्युर्वशीं महादेवीपदे निवेशितवान् । किञ्च,

यदपत्यतया स्तौति श्रुतिरेव हुताशनम् ।
ऊर्वशी - तत्पतिभ्यां तु पावनान्तरमस्ति किम् (?) ॥ ८ ॥

श्रुतिरपि ताभ्यां रूपिता " अरणिजन्यो वह्निरश्वमेधं च पुनाति " इत्याह ।

राजा—तथा श्रूयते खलु पुराणेषु ।

मन्त्री—(स्वगतम्) महाराजमनिच्छन्तमपि मोहयितुमेषा प्रगल्भैव । तदस्माभि-रवकाशो देयः । (प्रकाशम्) देव ! किंचिद्राजकार्यमस्ति ।

राजा—किं तत् ?

मन्त्री—भवद्राज्यरत्नभूतं परं ब्रह्म निराकृत्य, तत्प्रतिबिम्बतया तच्छेषभूतानस्मत्कल्पान् जीवानेव संसारिणः परमार्थपदे स्थापयन्, वेदविचारोऽस्माकमरातिरेव । तस्मात्तदुच्छेदाय गच्छामि ।

राजा—साधु चिन्तितममात्येन ।

(मन्त्री निष्क्रान्तः)

**मिथ्या-(महाराजं कण्ठे गृहीत्वा,)** महाराज ! दर्शनमात्रेण चिरकालानुरूढप्रणय-**पेशलो लक्ष्यसे । किन्तु,**[1]

चन्द्रदर्शनमात्रेण चन्द्रकान्तशिलाऽपि यत् ।
द्रवीभवति तत्पुंसि स्निह्यति स्त्रीति नाद्भुतम् ॥ ९ ॥

राजा—(सपुलकोद्गमम्) (स्वगतम्) प्रकृतिप्रगल्भैव वश्याजातिः, यदनिच्छन्त-मपि मामियं मोहयति । (प्रकाशम्) प्रेयसि ! समान प्रणयपरवशतया न किञ्चिदपि मे[2] परिस्फुरति प्रियालापः ।

मिथ्या-(सविलास पश्यन्ती) देव ! दृश्यताम्,

1. अथवा –पा०
2. मे मनसि –पा०

मन्दारपुष्पमकरन्दसपीतिलीला-
मन्दायमानरुचमात्मवधूं द्विरेफः ।
पक्षाञ्चलेन परिरभ्य ददाति तस्यै
चञ्चूपुटेन सरसीरुहकेसराणि ॥ १० ॥

राजा—करभोरु ! किमेतदिति न जानामि ।

मन्दस्मितं मधुमदारुणगण्डभागं
ताम्राधरं तरललोचनमाननं ते ।
नारीनिरीक्षणनिवृत्तकुतूहलं मे
चेतो विमोहयति सुन्दरि ! किं करोमि ? ॥ ११ ॥

मिथ्या—( साट्टहासं करेण करमास्फाल्य ) सम्यगुपलब्धाऽसि ।

पुरुषा मयाऽद्य दृष्टा दिवि भुवि ये सन्ति [1]पुण्यजन्मानः
किं तैर्गृहीतचित्ता देवनैवास्म्यनन्यकौतुकिनी ॥ १२ ॥

तदेवं तत्त्वज्ञोऽपि किमेवं[2] आकुलयसि ?

दृश्यतामेष देवेन भुजो मे पुलकोद्गमैः[3] ।
समीकरोति संफुल्लकदम्बद्रुममञ्जरीम् ॥ १३ ॥

राजा—किं करोमि ? धर्मं प्रति पर्याकुलोऽस्मि ।

मिथ्या—(विहस्य)

वेदाश्शास्त्रमिदं जगच्च सकलं मिथ्यैव यत् दृश्यते
यत् दृश्येत च पुण्य - पाप - नरक - स्वर्गादि शास्त्रेषु च ।
तत्सर्वं खलु जीविकैव विदुषस्तत्त्वं तु तत्केवलम्
ब्रह्मेति प्रतिपादयन्नपि मुधा वेदान्त ! किं मुह्यसि ? ॥ १४ ॥

---

1. पुण्यकर्माणः —पा०
2. एवं मामाकुलयसि —पा०
3. पुलकाङ्कितः —पा०

राजा—अयि ! त्वमेवं ब्रह्मवादिन्यपि मायावाददर्शितं मे सिद्धान्तरहस्यं दर्शयसि ।

मिथ्या-किञ्च, यथा पुष्करपलाश आपो न श्लिष्यति ;

राजा--(स्वगतम्) रागान्धस्य समुचितोऽयं मार्गः, न तु नेतुरुदारशीलस्य ; तथापि, संप्रत्येवमभिनेतव्यम्[1]। (प्रकाशम्) [2]तथैवेदम्। (इति तस्याः करं गृहीत्वा) ब्रह्मवादिनि ! त्वत्संगो मे ब्रह्मविद्यासमृद्धिमुत्पादयति ।

मिथ्या-ब्रह्मवादिन् ! ब्रह्मानन्दानुभूतिं ते दर्शयामि (इति गाढमालिंगति)।

राजा-(सपुलकानन्दम्) कृशोदरि ! [3]किमिति ब्रवीमि ?

आख्यातुं तव पारयामि न दशामज्ञातपूर्वामिमां
आभोगस्तनमण्डलैरवयवैराश्लिष्यमाणस्त्वया ।
आनन्दामृतसागरान्तरधुना गाढं निमग्नो भवन्
आत्मानं न च किंचिदन्यदथ वा जानाम्यहं प्रेयसि ! ॥ १५ ॥

मिथ्या-देव ! सकलकलाविदग्धा ; संगीते लास्ये च मे कौशलं दर्शयामि । तन्नाट्यशालां प्रविशावः ।

राजा—तथा भवतु (इति सादरं तया सह नाट्यशालां प्रविश्य नाट्येन कोशादुन्मुच्य वल्लकीं ददाति)

मिथ्या-(सलीलमादाय, वीणामामृश्य नखाग्रैरास्फालयति)।

तत्त्वमसीति ब्रुवती श्रुतिरेव श्वेतकेतुमुद्दिश्य ।
परजीवयोरभेदं ब्रुवतस्ते भवति विक्रमपताका ॥ १६ ॥

राजा-(सहर्षम्) श्रुतिगीतिरमृतवर्षैः श्रुतिमानन्दयति ।

---

1. सम्प्रत्येवं भवतु —पा०
2. तथैव खल्विदम् —पा०
3. किमन्यद्ब्रवीमि —पा०
4. नखैः —पा०

किञ्च,

मिथ्या— होदि तुह वेदमौळे किंती मुत्ताळआ व कंठगआ ।
गाअंदीणं महुरं भूसा गंधव्वरायकण्णाणम् ॥ १७ ॥

अविअ,

कंठे हारळआ कवोळफळए कंपूरपंतावळी
धम्मिंले णवमालिआ सुइवहूवग्गस्स णिग्गच्छइ ।
किंती मोंतिअणिम्मळा तुह महामोक्खेक्कदिक्खागुरो !
जोण्हा होदि [1]अ भेददंसणसिरीवंतारविंदेसु आ ॥ १८ ॥

[छा ॥ भवति तव वेदमौळे कीर्तिर्मुक्तालतेव कण्ठगता ।
गायन्तीनां मधुरं भूषा गंधर्वराजकन्यानाम् ॥ १७ ॥

अपिच,

कण्ठे हारलता कपोलफलके कर्पूरपत्त्रावळी
धम्मिल्ले नवमालिका श्रुतिवधूवर्गस्य निर्गच्छति ।
कीर्तिर्मौक्तिकनिर्मला तव महामोक्षैकदीक्षागुरो !
ज्योत्स्ना भवति [2]च भेददर्शनश्रोवक्त्रारविन्देषु या ॥ १८ ॥]

राजा—( सभयोत्कम्पम् ) ( स्वगतम् ) हा ! कष्टं आकाशे भरतशापमन्त्रमीरयन्ती प्राकृतं गायसि । नाटकेऽस्मिन्नप्राकृते अपालोकरणमेवैतत् ।

मिथ्या—हा ! हतास्म्यहं भाग्यहीना[3] महाराजं परित्यजामि ।

( इति प्रलपन्ती निष्क्रान्ता )

राजा—( सत्वरमुत्थाय ग्रहीतुमिच्छन् ) हा ! किं कृतं दैवेन ?

गृहीतेऽप्यंशुके यान्ती न दृष्टा कापि सुन्दरी ।
न करेऽप्यंशुकं दृष्टं मन्ये मायेयमङ्गना ॥ १९ ॥

---

1. विभेद —पा०
2. विभेददर्शन —पा०
3. भाग्यहीना प्राणानिव महाराजम् —पा०

( विचिन्त्य सानुतापम् ) हा ! प्रिये ! किं करोमि ?

तिर्यगवलोक्य यान्तीं दीनैरपि दीर्घपातिभिरपाङ्गैः ।
मम चिन्तयन्मनस्त्वां पावकलीढमिव परितपत्यन्तः ॥ २० ॥

अथवा किं मनस्तापेन ? यदिदानीम्,

मुग्धहसितं मुखं ते मणिमयताटङ्कमण्डितकपोलम्[1] ।
न जहाति मानसं मे नष्टं नयनस्य केवलं भाग्यम् ॥ २१ ॥

( विमृश्य ) यद्वा, संप्रति सकलभाग्यभूमिर्नयेनमेव; अहमेक एव खलु लुप्तभाग्योऽस्मि । यतः,

तटितमिव दृष्टनष्टां मम पश्यत एव मार्गमाणं त्वाम् ।
यद्यत्पश्यति नयनं तत्तदपि त्वन्मुखेन्दुराभाति ॥ २२ ॥

( विचिन्त्य ) हा करभोरु ! कथमेकपद एव तादृशप्रेमशालिन्यपि निरनुक्रोशाऽसि ? अयि, प्रिये !

मा त्वं प्रयाहि मदिराक्षि ! मया कृतं ते
पश्यामि नाल्पमपि दोषमथापि किं माम् ।
काष्ठागतप्रणयकन्दलितं जहासि
का वा गतिर्मम भविष्यति कांक्षतस्त्वाम् ॥ २३ ॥

( परितोऽवलोक्य ) प्रियाशोकसागरे निमज्जन् [2]यानपात्रभूतं न कंचिदपि पश्यामि ।

( ततः प्रविशति इतिहासः )

इतिहासः—मायाविलासिन्या सह विहरन्तं महाराजमनवसरज्ञः कथं पश्यामि ? ( पुरोऽवलोक्य ) कथमेकाकी तिष्ठति महाराजः ! ( मन्दमुपसृत्य ) महाराज ! विजयस्व ।

1. मुद्रितकपोलम्—पा०
2. पारभूतम्—पा०

राजा—(विवशमवलोकयन्) इतिहास ! दुःखसागरे निमज्जतो मम यानपात्रमसि ।

सौदामिनीव मेघं मां त्यक्त्वा मायाविलासिनी ।
गताऽहं किं करिष्यामि विरहानलविह्वलः ॥ २४ ॥

कथय, कथं तामासादयामि ?

इतिहासः—(विमृश्य) किमपराद्धं देवेन ?

राजा— न हि न हि ; भरतशाप[1]मवधीरयन्त्यास्तस्याः प्राकृतगीतिरेवापराध्यति ।

इति — (विमृश्य स्वगतं) हा ! मुग्धे वर्धकि ! गर्दभीवत् स्ववाग्दोषेण हतासि ।

(निरूप्य प्रकाशम्) संप्रति ऊर्वशीविरहितस्य पुरूरवसोऽवस्था देवमुपस्थास्यति । तदेतन्मन्त्रिणे निवेदयामि ।

(इति निष्क्रान्तः)

राजा— कथमेकाकी शोकसागरं निस्तरामि ?

(ततः प्रविशति यतिराजः, सुनीतिश्च)

यतिराजः—भद्रे ! मायाकुट्टिनीवियोगविह्वलं महाराजमाश्वासयितुं तत्सुहृदा यामुनेन समादिष्टोऽस्मि ; तदासन्नवसरे सुमतिसख्यास्ते दर्शनं क्षते क्षारमिव राज्ञो भवति ; ततः, क्वचित्तिरोहिता राजकुलवृत्तांतमुपलभ्य सख्यै निवेदय ।

सुनी — (तथा करोति)

यति — (किंचिदुपसृत्य) देव ! विजयस्व ।

राजा— (सादरं पश्यन) चिन्तासमकालमागतोऽसि ; त्वमेव मे दुःखार्णवनिमग्नस्य कर्णधारो भव ।

यति —(सदयम्) कथमेतत् ?

राजा— किं न पश्यसि विरहविक्लबान्यङ्गानि ?

यति — (स्वगतम्) तावदेनं शोधयामि । (प्रकाशम्) देव ! देवी सुमतिरपि किमेवमपराध्यति ?

1. अगणयन्त्यास्तस्याः —पा०

राजा— नहि नहि ।

यति — का पुनरेवं करिष्यति ?

राजा— (सलज्जम्) मायाविलासिन्या विप्रलब्धोऽस्मि ;

मन्दस्मितं च वदनं मधुरं च वाक्यं
व्रीडाविलासललितानि च वीक्षितानि ।
रूपं च तल्लिखितुमप्यतिदूरमस्याः
तत्सर्वमात्मानं लिखं स्तरलीभवामि ॥ २५ ॥

यति — (सभयाश्चर्यम्) हन्त ! महाराजमप्येषा किमेवं विप्रलब्धवती ?

राजा— किमन्योऽप्यनया विप्रलब्धोऽस्ति ?

यति — किमेक एव ; (इत्यर्धोक्ते सभयं विरमति)

राजा— (विहस्य) विस्रब्धमुच्यताम्, अहं सर्वमप्यस्याश्चरितं श्रोतुमिच्छामि ।

यति — देव ! क्षम्यतां यथादृष्टं निवेदयामि । यदुत,

आबालगोपमखिलैरपि बोधहीनैः
अन्यैश्च पक्षिपशुजन्मभिरात्मशुल्कैः ।
भुक्ता चिराय भुवनत्रयपुंश्चलीयं
स्पृष्टा कथं भवति बोधनिधे ! त्वयाऽपि ॥ २६ ॥

राजा— (सलज्जमधोमुखस्तिष्ठन्) किमनयाऽहं तत्त्वतो वञ्चितोऽस्मि ?

यति तद्देव एव निरूपयतु ; वस्तुगतिरावेदितैव ।

राजा— (निरूप्य) सम्यगनया विप्रलब्धोऽस्मि ।

सुनीतिः-(सखेदम्) [1]कुहकजनकुटुम्बिनी डम्भकुलकुम्भदासी कुदृष्टिलोककुट्टिनी मिथ्यादृष्टिचण्डाली, चण्डांशुमिव तमस्विनी, कथं देवमनवधिकबोधराशिं सुमतिवल्लभं स्पृष्टवती ?

---

1. कुहककुटुम्बिनी —पा.

राजा—( विमृश्य ) सानुतापं एवंभूतस्य मे किमस्ति प्रायश्चित्तम् ?

सुनीतिः–( स्वगतम् ) भगवद्भक्तिरूपायाः सुमतेः पादवन्दनमेव प्रायश्चित्तम् ।

यति—( विहस्य ) अस्ति चेत् , देवी सुमतिरेव जानाति ।

राजा—( विचिन्त्य ) तत्तु न संभाव्यम् ; छायासंबन्धमपि न सहन्ते हि योषितः ?

यति—नाहमत्यन्तं राजकुले परिचयवानस्मि ; तथाऽपि ब्रवीमि ; सुनीतिरत्र प्रभवति ।

राजा—सा च मन्त्रिविद्वेषाद्राजकुले न प्रकाशं तिष्ठति ।

यति—देव ! सुनीतिरहितं राज्यं न चिरं तिष्ठति ।

राजा—किं करोमि ? मन्त्रिमते स्थातव्यमेव । सुनीतिमनुपालयन्ती सुमतिश्च राजकुलं न गणयति ।

यति—सुमतिसुनीतिरहितं राज्यमेव न भवति । ( विमृश्य )

मतिनीतिविहीनस्य महतोऽपि विनश्यति ।
राज्यमित्यत्र दृष्टान्तो रावणस्य महापुरी ॥ २७ ॥

राजा—( विचारयन्नधोमुखस्तिष्ठति )

सुनीतिः–मायावादवशवर्तिनो महाराजस्य हृदये यतिराजहितोपदेशोऽपि नारोहति ; न हि महारोगगृहीनाय महौषधं रोचते ?

यति—( सभयम् ) राजहृदयमविज्ञाय कथितवानस्मि ।

राजा—भगवन् ! हितमेव कथितवानसि, विरला एव हि राज्ञां हितस्य वक्तारः । तद्भवता मदन्तिके स्थातव्यम् ; राजकार्यं च किंचिदस्ति ।

सुनी—( सहर्षम् ) तथा सति राजकुलं च यथाप्रमाणमेव स्थास्यति ।

यति—यदादिशति देवः ; भगवान् यामुनोऽप्येवमनुशास्तु ।

राजा—मत्सुहृद्देषोऽपि तथाऽनुजानात्येव । ( पश्चादवलोक्य )

परिणामपाटलमिदं फलमिव रविबिम्बमम्बररसालात् ।
पतति जलधौ मनुष्यैः प्राञ्जलिभिः प्रार्थ्यमानमिव ॥ २८ ॥

यति — ( दृष्ट्वा सत्वरमुत्थाय ) आसीदत्यनुष्ठानवेळा ( इति निष्क्रान्तः )

सुनी— क्षणं स्थित्वा, राजहृदयं विज्ञाय गच्छामि ।

राजा— ( दीर्घं निश्वस्य ) बलान्निगृह्यमाणमपि चेतः प्रेयसीमनुधावति, परिवादाच्च भीतोऽस्मि ; तत्किंकरोमि ?

नष्टरुचिरद्य रागी नलिनीविरहेण विह्वलो भास्वान् ।
पतति गरुदंशुकोऽयं पश्चिमसंध्याप्रवाळशय्यायाम् ॥ २९ ॥

मत्तापस्य तु प्रतीकारं न पश्यामि । ( इति निष्क्रान्त. )

सुनी — एवमप्यस्य मिथ्यादृष्टिमजहतो राज्ञस्सूर्योदयेऽप्यन्धकारो न शाम्यति ।

( इति निष्क्रान्ता )

इति श्रीवत्सकुलतिलक श्रीसुदर्शनाचार्यतनूभवघटिकाशत-
श्रीमद्वरदाचार्यकृतौ वेदान्तविलासापरनाम्नि
" यतिराजविजये " द्वितीयोऽङ्कः



# तृतीयोऽङ्कः



( ततः प्रविशति चामरहस्ता सद्विद्या, गीता च )

गीता—भद्रे ! राजकुलादापतन्ती राजकुलवृत्तांतं ब्रूहि ।

सद्विद्या—सर्वदा राजपार्श्ववर्तिनी सर्वमहं जानामि । पूर्वेद्युस्सदृहमहितो राजा एवं चिन्तितवान् ; यथा किल,—" रामानुजस्य मति - नीति - प्रतिभा - सत्त्व - समुत्साहसंपदः समीक्ष्य, तमेव महामन्त्रिपदे निवेदयामि । मायावादस्तु प्रमाणपुरुषसंपादितं मदैश्वर्यमशेषं मिथ्येति ब्रुवन् [1]नाशयतीति प्रतिभाति । तेन तद्विज्ञाय मायावादेन भास्करयादवसहितेन राजकुले निरुद्धप्रवेशो रामानुजः सामर्षाभ्यां शिष्याभ्यां सह कृतप्रतिज्ञः कांचीपुरीं गतवान् । सेनापतिः सदृहश्च तेन राजकुलान्निरस्तो गतस्सामर्ष एव न ज्ञायते क्व वर्तत " इति ।

गीता—( सभयम् ) हन्त ! मन्त्रिणोऽधुना किं भविष्यति ?

सद्वि—देवी संप्रति कथं तिष्ठति ?

गीता—प्राणान् धारयन्ती तिष्ठति । देवस्य च नाद्यापि शंभलीस्नेहो विरमति । न ह्यसदृशसपत्नीकरणादभ्यधिकं दुःखं नारीणाम् । तथापि, सर्वंसहा सपरिवारा राजाभ्युदयाय सन्मन्त्रिलाभमभिलषंती सुनीतिसहिता देवी नारायणमाराधयति ।

सद्वि—( साशंसम् ) सख्यास्संकल्पलाभोऽस्तु । रामानुजकृतोपजापा अपि संभूय मन्त्रिणस्सर्वे सर्वदा राजानं सेवन्ते । तदहमपि गच्छामि । मायाशीलोऽपि महामन्त्री सर्वास्वपि विद्यासु मामेव सबहुमानं पश्यति ।

गीता—( सखेदम् ) एवमप्रियकारिण्यपि राज्ञि निकामं रागिणी देवी नितान्तं परितप्यते । तं परितापमह " मेव " मिति निर्वक्तुं न शक्नोमि । किन्तु ;

1. अशेषं नाशयति—पा०

सन्तापस्फुटितोज्झितस्तनतटैस्संछादितं मौक्तिकैः
भस्मीभूतनवप्रकाशशयनं पर्याकुलैरंगकैः ।
निश्वासग्लपितप्रसूनकलिकानिर्विण्णभृंगीकुलं
तस्यास्तापमनक्षरं कथयते तन्व्या लतामण्डपम् ॥ १ ॥

सखि—(सखेदम्) मदभिन्नायास्तस्यास्तापो मदङ्गैरेव निर्वापणीयः। तथापि, परतन्त्राऽहं किं करोमि?

गीता—तर्हि गम्यताम्; अहमपि तत्तापचिकित्सायै कमलिनी-पलाश-कर्पूर-हरिचन्दन-किसलयादिकमादातुं गच्छामि। (इति निष्क्रान्ते)

(इति प्रवेशकः)

(ततः प्रविशति यामुनकरावलंबी यादवभास्कराभ्यां अनुगम्यमानो मायावाददर्शितमार्गो वेदमौलिः)

माया—इत इतो देवः। पादपद्माभ्यां पद्मरागसोपानपदवीं परिष्करोतु।

भास्करः—(सरभसमुपगम्य, कराभ्यामुपमार्जयन्) इदं भद्रासनम्।

यादव—देव! विजयस्व! भद्रमस्तु भुवनस्य! भद्रासनमारुह्यताम्।

राजा—(यामुनमुखमवलोकयति)

यामुन—देव! तथा क्रियतां लोकाभ्युदयाय।

राजा—(उपविश्य, समन्तादवलोकयन्) सर्वेऽपि यथास्थानमुपविशन्तु।

मन्त्रिणः—यदाज्ञापयति देवः। (इति सर्वे यथास्थानमुपविशंति)

राजा—(यामुनमुखमवलोक्य, कराग्रेण दर्शयन्) इदमासनं विविक्तमध्यास्यताम्।

यामु—(स विनयं उपविशति)

भास्क—(स्वगतम्) सबहुमानं प्रणयरसवर्षिणी देवस्य दृष्टिर्मय्येव निपतति।

याद—(स्वगतम्) धन्योऽस्मि [1]देवप्रसादेन; यदसौ मामेव सस्मितमवलोकयति।

---

1 स्वामिप्रसादेन—पा.

माया—(स्वगतम्) द्वयोरपि दाक्षिण्यमात्रमेव। देवस्य प्रणयबहुमानविस्रंभास्तु मय्येव।

राजा—(समन्तादवलोक्य)

संन्यस्तभारः सचिवेषु को वा महीपतिर्मन्त्रमहत्तरेषु।
निरस्तनिःशेषरिपुप्रसंगं सुखेन भुंक्ते विषयं स्वकीयम्॥ २॥

(यामुनमुखमवलोक्य) कथ्यतामार्य! कश्चिदस्ति चेदेवंविधो राजा।

यामु—देव! न शक्यते नास्तीति निर्वक्तुम्। किंतु, देवं प्रति न कश्चित्। तथाहि:—

राजन्! सप्त महान्ति सन्ति भुवनान्येष्वेव किंचिन्मही
सम्राजोऽपि तदेकदेशपतयः पूर्वे च पूर्वादयः।
तादृग्लोकपरःसहस्रभरितब्रह्माण्डकोट्या धृतम्
मूर्ध्ना शासनमेव यस्य स भवान्वर्ण्येत किं तैस्समः॥ ३॥

किंच,

प्रत्येकं नियतस्वकीयविषयाः प्रत्यक्षमुख्या नृपाः
त्वन्मित्राणि निशाततर्कदलितप्रत्यर्थिधीसंपदः।
मर्त्यानन्दशतोत्तरोत्तर[1]घनानन्दामृतैकार्णवं
त्वं च ब्रह्म महाविभूत्यनुभवं स्तुष्टोऽसि पुष्टोऽसि च॥ ४॥

माया—(सासूयं पश्यन्, आत्मगतम्) जाल्मोऽयमलीकारोपेण महाराजमात्मसात्कर्तुं प्रभवति। निखिलप्रपंचनिषेधरूपपरब्रह्माभिमुखीकृतस्य वेदमौलेः तदितरसकलप्रपंचसाधकं प्रत्यक्षादिकं प्रतिपक्षकोटिनिविष्टमित्येतदपि न जानाति।

याद—महाराजं प्रति सर्वमपि युज्यते।

राजा—(मायावादमुखं सस्मितम् अवलोकयति)

---

1. महानन्दामृतैकार्णवम्—पा०

माया—देव ! चाटूक्तयो न तत्त्वपदवीमुपजिघ्रन्ति ।

भास्क—तत्त्वमपि कदाचित् कचिदुपजिघ्रति ?

राजा—सर्वमप्यस्तु । यामुनोक्तिर्मे तत्त्वमेव प्रतिभाति ।

माया—[1]तव कविरचनाकौशलमेव, यदविद्यमानमपि विद्यमानवत्प्रतिभाति ।

यामु—न वयमलीकवाचाटा वन्दिनः। अस्मदुक्तिस्तत्त्वोक्तिरपि, उल्लोकतया चाटूक्तिवत् मन्दमतीनां परिस्फुरति । महापुरुषमुखात् प्रमाणवन्त्येव वचांसि निस्सरंति ।

माया (सासूय पश्यन्) किं भवान् प्रमाणवार्तामपि जानाति ?

याद—(विहस्य सोल्लुण्ठम्) भवानेव प्रमाणतत्त्वं जानाति ; येन सहस्रमेय-प्रपञ्चमप्यपलपसि ।

माया—(सरोषमवलोक्य, साट्टहासम्) प्रपंचमप्यलपसि—इति, किं कन्यागर्भ मुद्भावयसि ? (समन्तादवलोक्य यदि धीमन्तः, सर्वे भवन्तः शृण्वन्तु—

मानात्सिद्ध्यतु सर्वमेव भुवनं मानं तु सिद्ध्येत्कुतः ?
किं स्वेनैव तथाऽस्तु तर्हि भुवनं मानेऽपि मानं यदि ।
हन्त ! स्यादनवास्थतिर्विरमतो मेयं च न स्यादिति
क्वासौ तिष्ठतु विश्वमत्र[2] सकलं सत्यं ब्रुवाणो जडः ॥ ५ ॥

याद—(विहस्य) कुतोऽनवस्था ; तत्रापि हि स्वतःसिद्धैव संवित् ।

यामु—तथा खलु तत् । तत्त्वं च तस्याः[3], स्वतस्त्वात्, अर्थक्रियानिर्वहणाद्वा सिद्ध्यति ।

राजा—भवतु ; जानीमो मतिवैशद्यमीषाम् ( इति व्याजान्तरेण चासरहस्तया क्षान्त्या सह सँल्लपन्नश्रवणमभिनयति )

1. तव कविरचनाकौशलमेव—पा

2. विश्वमद्य—पा०

3. तस्याः एवमन्न प्रमाणस्य प्रामाण्यं स्वतस्त्वात्—पा०

भास्क—( मायावादं प्रति सोल्लुण्ठम् ) सर्वलोकशास्त्रसाधारणीमपि प्रमाणप्रमेय-पदवी[1]मपलपतस्ते चिराय गोपितमपि सर्वज्ञत्वमुन्मीलति ।

याद — भोः सर्वापलापिन् ! प्रमाणव्यवस्थामनादृत्यापि यत्किंचित् साधयन्, त्वमपि यस्य कस्यचिद्यत्किंचिदेवासि । ( सर्वे हसन्ति )

माया —( सक्रोधम् भ्रुकुटीमुद्दलयन् भास्करमवलोक्य ) भो ! जाल्म ! जल्पतु नाम यादवो यत्किंचित् । किमात्थ रे कितव ! सर्वोपनिषदभ्यासेन सकलवैदिक-शिरोरत्नस्य मे सर्वज्ञशब्देन पाषण्डित्वमुद्भावयसि ?

भास्क (विहस्य ) किं सर्वज्ञत्वमपि ते दोषाय ! तर्ह्यन्यथाऽस्तु ।

माया भो भो ! भास्कर ! प्राज्ञम्मन्यमानस्य ते कथयामि; परमार्थतस्सत्ताऽऽभावेऽपि व्यावहारिकसत्तयाऽपि मे सर्वव्यवस्था सिद्ध्यत्येव ।

याद -- ( विहस्य ) किं तावता सिद्ध्यति ? सौगतेनापि तदेव, संवृतिसत्यमिति नामान्तरेण, अङ्गीक्रियते ।

मिथ्येति [2]विदितैरर्थैर्न किंचित्कर्तुमर्हति ।
स्वप्नलब्धसुवर्णेन किं कार्यं कर्णभूषणम् ॥ ६ ॥

न ह्यसत्यम्, अर्थक्रियाकारि भवति ।

माया —( सक्रोधसंरंभम् समन्तादवलोक्य ) आः कष्टम् ! एकवराहं प्रति अनेकसारमेयास्समुत्पतन्ति, तदिदमत्र शरणम् । ( इति कूर्मासनं परामृशति )

भास्क—( सत्वरं त्रिदण्डमादत्ते )

याद — ( काषायमाबध्नन् कमण्डलुं गृह्णाति )

यामु —( सभयरोपम्, दृशा राजानं दर्शयन्, निर्भर्त्सयति )

सर्वे — ( सभयमुपशाम्यन्ति )

1. प्रमेयव्यवस्थाम —पा॰
2. विदितो लोको न किंचित्साधयिष्यति —पा॰

माया—(स्वगतम्) भृत्यनिर्विशेषा अप्येते मय्येवं युगपदकांडे वैरमाचरन्ति । भवतु ; सद्य एव राजकुलान्निरस्यामि ।

राजा—(विचिन्त्य सखेदं, स्वगतम्) सर्वेऽप्येते नीतिविदोऽपि नित्ये वस्तुनि मुह्यन्ति ; मिथो वैरमप्याचरन्ति ; यामुनस्तु नीतिनिपुणोऽपि, नितान्तं निस्पृहतया, नात्यन्तमुद्योगमाचरति । (विचार्य सनिर्वेदम्)

राज्ञो मन्त्रिकुलस्य तस्य च मिथो यत्रैकताना मतिः
तद्राष्ट्रं सुखमेव तिष्ठति मिथस्तेषां विरोधे सति ।
नश्यत्येतदशेषमप्यहिभयं तद्वर्ततेऽस्मासु तत्
किं भावीति न वेद्मि नीतिनिपुणो मन्त्री न कश्चित्परः ॥ ७ ॥

भवतु ; पश्यामः । (इति सर्वानवलोकयति)

सर्वे—(यामुनवर्जमधोमुखा भवन्ति)

राजा—(स्मितं कृत्वा, मायावादमवलोक्य) महामन्त्रीश्वर ! किमर्थमासनमन्वेषितम् ?

माया—देव ! सुखावस्थानाय ।

राजा—युज्यते । (भास्करमुखं पश्यति[1])

भास्क—देव ! यतिलिङ्गानि नातिदूरे स्थातुमर्हन्ति ।

राजा—(विहस्य, यादवमवलोकयति)

याद—देव ! सर्वं ते विदितमेव । कण्डूयने करप्रक्षालनाय कमण्डलुरानीतः ।

राजा—(विहस्य, यामुनमुखं पश्यति)

यामु—देव ! प्रसीद ; सापराधेषु खलु क्षमा जीवति ?

राजा—(विमृशंस्तिष्ठति)

---

1. पश्यति ) महाधीमन्, किमिह त्रिदण्डमानीतम्—पा०

( नेपथ्ये )

जय जय, महाराज ! जगत्यप्रतिहतशासनो विजयस्व ।

कीर्तिं ते भृगुनारदप्रभृतयो गायन्ति मञ्जुक्वण-
द्वीणारञ्जितगीतयः श्रुतिसुखं विद्याधरैः सेविताः ।
मन्दारद्रुमवाटिकासुभगयो[1] र्मन्दाकिनीकूलयोः
मध्ये मन्दरगन्धमादन [2]तटारण्यानि पुण्याधिकाः ॥ ८ ॥

अपिच,

पञ्चार्थीपदवीं प्रविश्य विहरत्यम्लानधीरेष यत्
पश्यत्यात्मनि च प्रतीचि परमं ज्योतिर्जगत्कारणम् ।
तत्साम्यं च निरंजनो भजति यन्मर्त्यो महानन्दभाक्[3]
तत्सर्वं कथयन्ति देव ! कवयस्त्वत्पादसेवाफलम् ॥ ९ ॥

राजा—( निशम्य, सपरितोषं ) काविमौ मधुरकण्ठौ मम हृदयमनुस्पृशन्तौ परमार्थं गायतः ? ( विचिन्त्य चिरविस्मृतमपि मदीयमर्थतत्त्वसंग्रहमिदानीमनुस्मारितोऽस्मि ।

माया—( विचिन्त्य ) महाराज ! सर्वं मिथ्येति जानन्नपि, पृथग्जनैरप्यनादरणीये वैनाळिकवचसि यथार्थबुद्धिः किं मुह्यसि ?

राजा—महामात्य, किं न जानासि नूतनं सर्वं कौतुकमुत्पादयत्येव !

माया—( विचिन्त्य सासूयं ) देव ! कौतुकं चेत् , कंचुकिनमाज्ञापय ।

राजा (कञ्चुकिनं पश्यति)

कञ्चुकी - यथाज्ञापयति देवः । ( इति निष्क्रम्य वैतालिकाभ्यां सह प्रविशति)

वैतालिकौ- ( पुरोऽवलोक्य सानन्दम् )

---

1. सुरभयो —पा०
2. महारण्यानि —पा०
3. महानन्दवान्—पा०

संसारमग्नसर्वात्मसमुद्धरणदीक्षितः ।
श्रुतिग्राह्योऽपि चक्षुर्भ्यां वेदान्तोऽयं विलोक्यते ॥ १० ॥

एकः—(सखेदम्) सखे रङ्गप्रिय !

तिष्ठन्नपि महाराज्ये दरिद्र इव निष्प्रभः ।
नीहाररविकल्पोऽयं नेत्रयोः प्रतिभाति मे ॥ ११ ॥

द्वितीयः—प्रियरंग ! श्रूयते खलु—प्रधानमन्त्रिणा मायावादेन महाराजो वेदमौलिः विलुप्तसकलविषयो निस्सत्त्वतामापाद्य शून्यकल्पः कृतः—इति । (निरूप्य)

नष्टराज्योऽपि वेदान्तो[1] नलवत्, धर्मराडिव ।
भूयोऽप्यशेषमैश्वर्यं [2]पुण्यशीलः प्रयास्यति ॥ १२ ॥

कञ्चुकी—भद्रौ ! उपसर्पतम्; राजा समुत्कण्ठते युवयोर्दर्शनाय ।

उभौ—(उपसृत्य) महाराज, विजयस्व ! मधुसूदनप्रसादोऽस्तु ।

संकल्पसिद्धवपुषः तमसः परस्तात्
पुंसा भुजंगशयनेन समानभोगाः ।
मुक्ता यशांसि तव मूलगतास्तरूणाम्
आरामभूमिषु पठन्त्यपराजितायाः ॥ १३ ॥

कञ्चुकी— वैतालिकौ महाराजं गायन्तौ विमलं यशः ।
रक्तकण्ठाविमौ प्राप्तौ रामं कुशलवाविव ॥ १४ ॥

राजा—(अङ्गुलिनखाग्रैरश्रुबिन्दून्विक्षिपन्) (आत्मगतम्) हन्त, वैतालिकवचनेन चिरातीतानप्येकहृदयान् सत्यवादिनो बोधायन - टंक - द्रमिड - कुहदेव - कपर्दि - भारुचिप्रभृतीनमात्यान् अनुमारितोऽस्मि । (समन्तादवलोक्य) (स्वगतम्) सर्वेऽपि मन्त्रिणः सासूयं एतौ विलोकयन्ति ।

1. देवोऽयम्—पा०
2. धर्मशीलः—पा०

माया—( स्वगतम् ) वैतालिकवचनमृगतृष्णाम्भसि निमग्नः स्वामी नाद्याप्युन्मज्जति; कथमेनमुत्तारयामि ? यद्वा, स्वदोषफलं स्वयमेवानुभवतु ।

राजा—( मायावादं पश्यति )

माया—( तूष्णीमधोमुखस्तिष्ठति )

राजा—( सप्रणयकोपम् ) संप्रत्यमात्यराजभावयोर्विपर्ययो[1]ऽस्तु । ( सबहुमानं वैतालिकौ पश्यन् ) कौ युवां किमर्थमागतौ ?

वैता—देव ! पूज्यपूजापूर्वकमेव विज्ञापयावः ।

राजा—( स्वगतम् ) ( विचार्य ) अथवा किं विचारेण; न ह्यमात्मविदां अकार्ये मतिरवतरति । ( प्रकाशम् ) तर्हि तथा क्रियताम् ।

माया—( स्वगतम् ) न हि षट्कर्मणि मन्त्रशास्त्रे च मत्तोऽन्यः पूज्यशंकास्पदम् । ( इति सबहुमानं आत्मचरणौ पश्यति )

याद—( स्वगतम् ) सर्वयतिषु सदाचारनिरतोऽहमेव पूज्यः । ( इति सचमत्कारं तिष्ठति )

भास्क—( स्वगतम् ) प्रभुसंमितः पण्डितोऽहमेव पूज्यः । ( इति दृशैव तौ समादिशति )

वैता—( सविनयमुपसृत्य ) यामुनचरणानुत्तंसयतः ।

यामु—( सभयम् ) अलमत्यादरेण, महाराजसन्निधौ । ( इति [2]काषायपटांचलेन चरणौ गोपयति )

राजा—( सबहुमानं पश्यति )

वैता—भगवद्रामानुजपदकमलमधुकरावावामिति भवद्भिरावयोः प्रसादः कार्यः ।

यामु—( सप्रणयबहुमानम् ) महाराजप्रसादपात्रे भूयास्तम् ।

वैता—भगवन् ! धन्यौ भवावः खलु भवत्प्रसादेन ।

१. विपर्यासः—पा०
२. काषायकर्पटाञ्चलेन—पा०

राजा—भद्रौ ! प्रश्नस्तथा तिष्ठति ?

वैता—(सभयं परिवृत्यावलोक्य) देव ! भगवद्रामानुजपदकमलपरागलेशा-
वावाम् ।

राजा—तत ज्ञातमेव गुरूपसत्तिवेलायां । [1] तद्विशेषमेव विवेचयितुमिच्छामि. ।

वैता— स हि [2] विद्यातो जनयिता आवयोः अपुनर्जननाय जनकः ।

राजा—(सहर्षं) स एव किं युवयोराचार्यः विचिन्त्य) स किमस्मान् स्मरति ?

वैता— देव ! कदाचिदपि न स्मरति ।

राजा—(साशंकं तिष्ठति)

वैता—किन्तु, योगबलेन सर्वकालमनुभवत्येव ।

राजा—(स्मितं करोति)

वैता— देव, प्रश्नान्तरमवधारयतु ।

राजा– स्मितं कृत्वा) भद्रौ ! क्षणं क्षम्यताम्, (जनान्तिकं) किं तत्समीपे
सदृह इति कोऽपि तिष्ठति ?

वैता—न केवलं तिष्ठति ।

राजा- किमन्यत् ?

वैता—मायावादमुन्मूलयितुमुपायमनुचिन्तयति ।

राजा—(मायावादमवलोक्य, सरोषमात्मगतम्,) दुरात्मन् ! स्वामिभक्तनिरासि-
नस्ते किं फलं भविष्यति ? (प्रकाशम्) भद्रौ ! युवां निवेदयतं यदागमन-
कार्यम् ?

वैता– (परस्परं मुखमवलोकयतः)

1. तद्दशगमेव, तर्हि शेपमेव—पा०

2. सकलविद्याजननहेतुरावयोः—पा०

राजा—(दक्षिणाक्षिस्पंदमभिनीय, सहर्षोत्साहम्) किमत्र विचारेण? विस्रब्ध-मावेदयतम् ।

वैता— सर्वमिदमेवावेदयिष्यति (इति पट्टवस्त्रापिहितं पत्रमुपनयतः)

यामु—(तद् गृह्णाति)

राजा—कुत एतत्?

वैता— तदपि तदेव वक्ष्यति ।

राजा—आर्य! पठ्यताम्, वाचिकं श्रोतुमिच्छामि ।

यामु -(पत्रमुन्मुच्य वाचयन्, स्मितं करोति)

राजा—किमवद्यमस्ति?

यामु—न हि न हि; निरवद्यमेव; किन्तु मञ्जीरं मस्तके निधित्सितमेताभ्याम् ।

राजा—कथमेतत्?

यामु—मदुद्देशागतं महाराजाय दर्शितमेतत् ।

राजा—को दोषः, तदपि मदीयमेव; वाच्यताम् ।

यामु—तथाऽपि वाचयितुं बिभेमि ।

राजा (बलाद् गृहीत्वा स्वयमेव वाचयति)

स्वस्ति श्री यामुनचरणारविन्दमभिवन्द्य काञ्चीपूर्णो विज्ञापयति । यथा किल— "संप्रति करिगिरिमरकतशेखरः कमलापतिः श्रीवरदराजो मत्समक्षमेव कृतसाक्षात्कारो रामानुजमुनिमाज्ञप्तवान्— "संप्रति बाह्यकुदृष्टिदुष्टसचिव पीडितो मदाज्ञापरिपालको वेदमौलिर्व्याकुलीभवति । तद्भवता तत्परिपालनं कर्तव्यम्" इति । यदुत, तदनुगुणमतिनीतिसत्त्वसमुत्साहादिसहायसंपदं दत्त्वा रामानुजं प्रहितवान् । तद्भवताऽपि वेदमौलिर्दिवानिशं सेवितव्यः" इति ।

यामु—(सानन्दं) महानयमभ्युदयः (विचिन्त्य)

ब्रह्माण्डेषु परिस्फुटत्सु युगपद्ब्रह्मायुरन्ते पुनः
सर्वेषु प्रतिसञ्चरत्सु चिदचित्सत्त्वेषु नृत्यत्कृपः ।
यस्त्वां रक्षितवान् यथापुरलसद्वर्णानुपूर्वीमयं
स [1]त्वां संप्रति पीड्यमानमितरैः विष्णुः कथं मृष्यति ? ॥ १५ ॥

माया—(भास्करयादवाभ्यां सह ससंभ्रमं समुत्थाय, ससंरंभम्) देव ! वैतालिकालीकवचनेन सम्यग्विप्रलब्धोऽसि ।

विदग्धवेश्याशैलूषपाषण्डविटवन्दिभिः ।
विप्रलब्धा विनश्यन्ति राजान इति नः श्रुतम् ॥ १६ ॥

इदानीं वा विरम्यतां, यावन्न विषमुन्मस्तकीभवति ।

भास्क—(यादवमङ्गुल्या निर्दिशन्) अयमहं च द्वावावां भवतो बहिरङ्गमेव; किमन्तरङ्गभूतोऽप्ययं बहिरङ्गतां नीयते देवेन ?

याद—(भास्करं प्रति जनान्तिकम्) भवत्वस्य दुरात्मनो गर्वक्षतिः ।

मन्त्री—(सक्रोधम् यामुनं पश्यन्) भो ! रावणसन्यासिन् ! भवन्मन्त्रमायामृगतृष्णिकाम्भसि निमग्नोऽयं स्वामी, राम इव कां गतिं यास्यति ?

प्रियरंगः—राम इव रामानुजबलेन स्वामी न कांचन दुर्गतिं यास्यति; किन्तु, सर्वत्र विजयी भवत्येव । त्वन्तु महानुभावमाक्षिपन् सर्वां दुर्गतिं गमिष्यसि । (विहस्य)

ब्रह्मसूत्रपरित्यागी मत्तो नान्य इति ब्रुवन् ।
त्वं तु रावणसन्यासी मायैकशरणो [2]भवन् ॥ १७ ॥

मन्त्री—(सरोषम्) साधु, वैतालिकवटो ! सम्यक् पटीयानसि । त्वमेव किं परमहंसस्य मे यज्ञोपवीतत्यागमवगच्छसि ?

1. त्वा—पा०
2. भव—पा०

प्रिय — न हि न हि ; सर्वेऽपि जानन्ति । यज्ञोपवीतत्यागी काको वा, हंसो वा[1] भवतु ; नाहमिदानीमेतत् कथयामि ।

माया — (विचिन्त्य) हुम् । किं शारीरकसूत्रपरित्यागमपि ? यथाजात ! श्रीवेदमौळिं अद्वैतसाम्राज्यमनुभावयता मया कथं तत्परित्यागः कृतः ? तद्गच्छ ; गायतो बालकस्य ते किं ब्रह्मविद्याप्रसंगेन ?

प्रिय — यथाजातो भवन्नहं न जानामि ; अयथाजातस्त्वं ब्रूहि ; किं संगीतविद्या बाल्यं च ब्रह्मविद्यां विरुणद्धि ? (विहस्य) प्रह्लादनारदौ परित्यजसि किं ब्रह्मविद्गोष्ठीषु ?

शुकनारदवृत्तान्तः किं ते बधिरवल्लकी ।
तौ हि ब्रह्मविदाचार्यौ तत्र किं प्रतिपद्यसे ॥ १८ ॥

रे ! वृथा पण्डितंमन्य ! पश्य ;

एतमात्मानमानन्दमयं लोकानिमान् पुमान् ।
उपसंक्रम्य कामान्नी कामरूप्यनुसंचरन् ॥ १९ ॥

एतत्साम तथा गायन्नास्त इत्यारमवत्प्रिया ।
नाधीना न श्रुता किं वा मायावाद ! त्वया श्रुतिः ॥ २० ॥

संप्रति तत्तिष्ठतु ; गगनकुसुमकल्पमद्वैतमिति किंचिदंगीकृत्य, तदेव सत्यम्, तत्परिपंथिरूपं ब्रह्मसूत्रकलापं, तदर्थभूतं ब्रह्मणः सकलचिदचित्प्रपंचकारणत्वं, तदनुगुणानन्तकल्याणगुणमोक्षप्रदानादिकं च मिथ्येति ब्रुवता भवता तत्परित्यागः कथं न कृतः ? तथापि, ब्रह्मसूत्रस्वीकारस्तु वैदिकजनवञ्चनाय; तत्त्वनिरूपणे वेदमौळेरद्वैतविषयानुभवोऽपि प्रतारणमन्तरेण न किंचित्सिद्ध्यति । (मन्दमन्दमुपसृत्य) मायावादिन्[2] ! सन्यासिनिवहसार्वभौम ! त्वमेव मे मस्तके हस्तं निधाय सत्यं ब्रूहि । स्वानुभवसिद्धं स्वयं ज्योतिरद्वैतमात्म-

---

1. हंसो वा परमो वा—पा०

2. सत्यवादिन् —पा०

सिद्धौ किमन्यदाकांक्षति? तदाकांक्षायां तु दृश्यतया ब्रह्म मिथ्यैव स्यात्।
(विहस्य)

[1]तच्च ब्रह्म न संवेद्यं संवेद्यमनृतं जडम्।
इति त्वत्कृतसीमायां त्वमेव परिमुह्यसि॥ २१॥

किंच तत्त्वमुच्यताम् कीदृशी ते मुक्तिः?

माया—कस्मिन् किं स्यात्?

प्रिय— न साध्या ब्रह्म चेन्मुक्तिः, तदन्या चेन्मृषैव सा।
मुक्तिशून्यस्य वेदान्तसंपदस्ते कपेः स्रजः॥ २२॥

माया—(सलज्जमधोमुखस्तिष्ठति)

राजा—(सहर्षम्) सत्यमाह प्रियरंगः।

माया—(स्वगतम्) सर्वात्मना अहमनेन दुरात्मना वंचितोऽस्मि।

रंगप्रिय—(सहर्षम्, भुजमास्फोट्य गर्जन् वल्गति)

भास्करयादवौ—(हर्षविस्मयागतं हासमन्तर्निरुध्य)

भो वैतालिकवटो! महाप्रगल्भोऽसि। तथापि महामात्यं परिभवन् न कदाचिद्विरमसि।

तृणीकृतबृहस्पतिस्त्रिभुवनैकवैतंडिकः
परान् गणयन्त्ययं प्रणदतोऽपि भेकानिव।
मदद्विरदमस्तकस्थलविपाटनक्रीडन-
प्रहृष्यदुरुकेसरप्रसरभासुरः केसरी॥ २३॥

प्रिय—मुद्रितमुखस्तिष्ठन् कथंकारं गणयतु?

राजा—भद्रौ! महात्यत्यतिक्रमो न कार्यः।

प्रिय—देव! भिक्षुकैरस्माभिरल्पात्यत्यतिक्रमोऽपि न क्रियते।

1. संविद्ब्रह्म—पा०

माया— (सामर्षम्) राजन्! वैतालिकाभ्यामलीकोक्तिविप्रलब्धः, किमस्मान् भिक्षून् परिभावयसि?

प्रिय — सर्वप्रपंचालीकवादिन्! किं ते सत्यमपि किञ्चिद्वचनमस्ति?

माया —(स्वगतम्) [1]सकलराजकुलगोष्ठीसंचारचतुरयोरनयोः उपच्छन्दनमन्तरेण न किञ्चिदुत्तरं पश्यामि। (प्रकाशम्) वत्सौ! युवयोः पाटवातिशयेन प्रीतोऽस्मि। युवां बालकौ वैतालिकौ सर्वैरुपलालनीयावेव। युष्मद्गुरोस्तु रामानुजस्योत्तरं अहं दास्यामि।

प्रिय —(सामर्षम्) मयि स्थितेऽपि किमाचार्यमालपसि? न हि कण्टकः पादुकामभिन्दन् पादतलमुल्लिखति।

रंग — (स्मितं कृत्वा) वयस्य! किमनेन परिश्रान्तेन। न हि कश्चिदात्तगन्धं पुष्पमवतंसयति?

(नेपथ्ये)

सुस्नानयुक्तमुखिनाखिलजीवलोकः
शान्तातपश्चरमभिक्षुभिरीक्षणीयः।
प्रक्षीणधूमपटलः परिणामरम्यो
भद्राय ते भवतु वासररश्मिमांशः॥ २४॥

राजा —(सबहुमानम् अमात्यान् पश्यन्) प्रत्यासीदति भवतामनुष्ठानवेलेति वैतालिकगीतिरस्माननुस्मारयति; तन्महामात्यं पुरस्कृत्य गन्तव्यम्। किंच, वन्दिनः स्तुवन्तु निन्दन्तु वा; राजकुलवासिभिः विशेषतो वीतरागैर्भवादृशैर्न तद्वचनं प्रमाणीकरणीयम्।

मन्त्री—महाराजेनापि तथैव मन्तव्यम्। (इति भास्कराभ्यां सह सामर्षं निष्क्रान्तः)

---

1. सकलप्रपंच—पा०

राजा (यामुनमुनिश्रेष्ठं पश्यन् सबहुमानम्) भगवन्! क्षणं क्षम्यताम्। कांचीपूर्णवचनं ते निगडीभवति। (विचार्य) वैतालिकवचनानन्तरमात्मानमन्यथाभूतं पश्यामि।

यामु—(विहस्य) कथमिव भवान्नान्यथा भवति? राहुगृहीतः शशी किं तथैव तिष्ठति?

राजा—(साश्चर्यम्) पंकादाशु समुद्धृत्य प्रक्षाल्य विमलांशुकैः।
प्रमृष्टमेव पश्यामि रत्नं मामद्य निर्मलम्॥ २५॥

यामु—(वैतालिकौ हस्ते गृहीत्वा) वत्सौ! युवाभ्यामावेदितः खलु रामानुजमतिनीतिविभावविस्तारः?

राजा—कः सन्देहः? प्रतिबिम्बमेव हि प्रमाणम् बिम्बसौन्दर्यस्य? भगवन्! कावेतौ रामलक्ष्मणाविव विद्याकौशलेन गुरुं प्रकाशयतः?

यामु—वत्सौ! प्रणमतं ब्रह्मविदं राजानम्।

रंग—वाधूलोऽहं दाशरथिरभिवादये।

प्रि०—वात्स्योऽहं सुदर्शनो वरदविष्णुरभिवादये।

राजा—(सप्रणयकौतुकम्) किं तावेतौ, याभ्यां विना [1]तु यतीन्द्रसन्यास—इति किंवदन्ती?

यामु—अथकिम्।

राजा—वत्सौ! यतिराजप्रसादभूमी भूयास्तम्। (विचिन्त्य) सामर्ष इव मन्त्री गत इति पर्याकुलोऽस्मि।

यामु—देव! न तथा भेतव्यम्।

किं सर्पो गरुडस्य पक्ष[2] पतनक्रीडाभिघातक्षमः[3]
किं कण्ठीरवकण्ठगर्जितमपि श्रोतुं समर्थः करी।

1. न—पा०
2. पक्षपवनक्रीडाभिघात—पा०
3. क्रीडाभि।तक्षम—पा०

यद्यप्येवमयं यतीश्वरकथागन्धेन मन्दीभवद्-
गर्वो दुर्विषहेण याति निलयं कुत्रापि विलासितः ॥ २६ ॥

राजा—(सहर्षम्) संप्रति समाश्वस्तोऽस्मि ।

यामु—देव! वैतालिकयोः प्रसादः कार्यः ।

राजा—(विचिन्त्य) स्वात्मदानं विना नान्यदनयोः सदृशं पश्यामि ।

वैता—(सहर्षम्) भृत्यजनसर्वस्वमेव खलु स्वामी । (समंतादवलोक्य) पश्य,

[1]प्राच्यालेख्यतुलां प्रयाति भुवनं स्पृष्टं तमःकन्दलैः
दृश्यन्ते प्रतिकर्मभिश्च सुदृशो देहान्तरस्था इव ।
दीप्यन्ते गृहदीपकाश्च विमला धीवन्महायोगिनाम्
सन्ध्योपास्तिमियं तनोति मुकुलव्याजांजलिः पद्मिनी ॥ २७ ॥

राजा—(समन्तादन्धकारं पश्यन्, साश्चर्यम्)

येन स्पष्टमदृष्टिगोचरतया सत्ताऽतिरिक्तं जगत्
मिथ्येति प्रतिभाति मीलितमिथोभेदप्रपंचोदयम् ।
आनन्वन् भृशमन्धकार [2]उभयीमज्ञानपारंपरीं
अद्वैतस्य पिता, गुरुः, किमथवा, किं वा तदेव स्वयम् ॥ २८ ॥

तस्मादस्माकमपि नियमकालोऽतिक्राम्यति ।

(इति निष्क्रान्तास्सर्वे)

इति श्री घटिकाशतश्रीमद्वरदाचार्यविरचिते वेदान्त-
विलासापरनाम्नि "यतिराजविजयनाटके"
वैतालिकप्रवेशो नाम तृतीयोऽङ्कः ।



1. प्रायः पत्रतुलां प्रयाति—पा०
2. इह या म.

# चतुर्थोऽङ्कः

(ततः प्रविशति जनकः)

जनकः—भो भोः! भवन्तः शृण्वन्तु।

प्रद्युम्नेन जितो गुहः, प्रतिहतो रामेण लंबोदरो
हा रुद्रो हरिहुंकृतो यदुभटा[1] गर्जन्ति जित्वा गणान्।
बाणं लूनभुजं हराय स हरिर्लब्धाऽनिरुद्धोऽर्पयन्-
भिक्षामीश्वर एष इत्यमरवागायुष्मतो पातु वः॥ १॥

अहो! विशृंखलः खलु विष्णोः शुभाश्रयलक्षण-मुमुक्षूपास्य-दिव्यमंगळ-विग्रहस्यानुभवः।

संविन्मयं सकलतत्त्वविभूषणास्त्रं
रूपं स्मरन् परमसाम्यमुपैति विष्णोः।
अज्ञानदोषविरहादखिलैश्च भोगैः
ज्ञानादिमंगलगुणैश्च भवत्यभेदी॥ २॥

(पुरोऽवलोक्य) सन्यासिनी समायाति केषा काषायधारिणी।
विरक्तिरथ निर्द्वन्द्वा किं वा शान्तिः शरीरिणी॥ ३॥

(निर्वर्ण्य) आः ज्ञातं, विष्णुभक्ता भगवती गीतैव।

(ततः प्रविशति गीता)

गीता—अहो! मुमुक्षून् प्रति भगवदौदार्यम्! कर्मज्ञानादियोगैराश्रितानेतान् यदात्मसमान् पश्यति।

जन—तावदेनामुपसंगृह्णामि, (ब्रह्मवादिनीमुपसृत्य) भगवति! नमस्ते।

---

१. यदुभवा—पा०

गीता – वासुदेवप्रसादपात्रं भूयाः । वत्स ! खाण्डिक्याय मुक्तौ किमुक्तं त्वया, परजीवयोरभेदलक्षणं स्वरूपैक्यम् ?

जन —न हि न हि ; स्वभावैक्यम् । (संविन्मयम् । इत्यादि पुनस्तदेव पठति)

गीता – तर्हि त्वयि मत्कीयावबुद्धिर्मायावादप्रभृतीनां "उन्मुखेन शिरःकण्डूयन"मेव पर्यवस्येत् ।

जन —कः सन्देहः ? न हि कश्चिदस्मिन् राजकुले भवतीमुल्लंघयति । (विलोक्य) किंचिदाकुलामिव भवतीमुपलक्षयामि ।

गीता—वत्स ! देवीं सुमतिमनुगृह्णन्निव देवो दृश्यते । तन्निमित्तमाकुलाऽस्मि ।

जन (साश्चर्यम् । किं निमित्तमेतस्य ; अथवा, संभवत्येव कदाचिन्निजकलत्र-प्रीतिः ।

गीता—(विहस्य मिथ्यादृष्टिविमोहितस्य न कदाचिदपि तत्संभवति । तथापि, यतिराजशिष्याभ्यां गृहीतवैतालिकवेषाभ्यां प्रविश्य प्रकाशितबहुनीतिविप्लवे मन्त्रिणि मायावादे विरक्तहृदयः, तत्पदे निरवद्यनिखिलनीतिविभवं रामानुजं निवेश्य, तदनुरोधेन देवो देव्या सुमतौ किंचित्साभिलाष इव तिष्ठति । तदनुरागवर्धनाय भगवतीं लक्ष्मीमाराधयितुं फलकुसुमादिसंपादनाय व्यापृताऽस्मि ।

जन — व्यापन्नगसार्वभौमसुरभिश्वासाकुलैः कुन्तलैः
भृङ्गभ्रान्तिकरैरलंकृतमुखाम्भोजा स्थिता वक्षसि ।
स्वच्छायावति कौस्तुभे कृतपदा पत्न्यन्तराशंकया
क्रीडापंकजताडितप्रियतमा देवी प्रसन्नाऽस्तु ते ॥ ४ ॥

तर्ह्यहमपि ते सहकारी भवामि (इति तया सह निष्क्रान्तः)

(इति विष्कम्भः)

(ततः प्रविशति रामानुजदत्तहस्तो राजा यामुनश्च)

राजा—(पुरोऽवलोक्य सानन्दम्)

पौरन्दरीं तिलकयन् ककुभं कराग्रैः
चन्द्रस्स एष हरिचन्दनपंकताम्रैः ।
आस्वादयत्यधरबिम्बमिमां सरागां
आलोकितः प्रणयपेशलमंगनाभिः ॥ ५ ॥

(पार्श्वमवलोक्य, सस्मितम्) [1]सन्यासनिर्धूतसकलसांसारिकवृत्तान्तयोर्युवयो-रेतदाकर्णनमपि कर्णयोरुपप्लवाय ।

यति—(कर्णौ पिधाय) न हि न हि,

भवन्मुखसमुद्भूतं सर्वं संसारभेषजम् ।
मातुःस्तनविनिष्ठ्यूतं पयो भवति किं विषम् ॥ ६ ॥

यामु—गृहिणोऽपि तवादेशकारिणो विषया अपि ।
स्वकलत्रोपभोगाद्याः कल्पन्ते मुक्तिहेतवः ॥ ७ ॥

देव! दीयतामितो दृष्टिः ।

आमीलद्भिरवेक्ष्य पत्रनिचयैरन्तर्निरुद्धां प्रियाम्
आधावन्मधुपानकेलिविवशामाक्रष्टुमिच्छन् बहिः ।
पक्षाभ्यां परिताडयन् पदनखैः पर्यायतः पाटयन्
तुण्डाग्रेण च खण्डयन् मधुकरः पंकेरुहं क्रोशति ॥ ८ ॥

राजा—[2]प्रणयरसपारभूमिः खलु दाम्पत्यम् । (पुरोऽवलोक्य सानुरागम्)

आनीलां करपल्लवैरपनयन् गाढां तमः[3]कन्दलीम्
आशां संप्रति वासवीमनुभवन्नक्षीणरागः शशी ।

1. स्वत्रामनानिर्धूत—पा०
2. प्रणयपारभूमिः—पा०
3. कञ्चुलीम्—पा०

अस्याश्च स्तनसंगिनीमिव वहन्नङ्केन कस्तूरिकां
आश्लिष्यत्ययमादरेण रजनीमर्धोन्मिषत्तारकाम् ॥ ९ ॥

ग्रामु —( राजानं चक्षुषा निर्दिशन्, जनान्तिकम् ) अयमिदानीमिन्दूदये[1] दूरमुन्माद्यति ।

ग्रामा —एवमप्यस्य भवतु रागोत्पीडः । स कदाचित्स्थाने पतिष्यति । देवी सुमतिश्च किंचिदुत्सुका तिष्ठति ।

ग्रामु —कथमेतत्संभवति ? यदेष [2]सकललोकसम्मोहनचतुरया मायाविलासिन्या वशीकृतः तया मुक्तोऽपि न तां मुञ्चति । तज्जानती सुमतिश्च मानवती तं न गणयति ।

ग्रति —तत्तथैव ; तथापि, मद्दर्शितसूत्रमार्गानुसारिणी सुनीतिः,[3] व्याजकुलषितौ तौ संयोजयितुं प्रभवति ।

ग्रामु —तथा सति संभवत्येव ।

राजा—किं भवन्तौ मन्त्रयतः ?

ग्रामु —त्वय्येवं[4] ललिते सति मन्त्रिष्वेव [5]कार्यभारः पर्यवस्यति ।

राजा—( [6]स्मयते )

( ततः प्रविशति सुनीतिः )

सुनीतिः —देवः, संप्रति स्वचरितनाटकावलोकनसमये मिथ्यादृष्टिभूमिकां परिगृह्य प्रविष्टे वैदेशिके भरते, दृष्टदुष्टतमहास्यचेष्टायां मिथ्यादृष्टौ, किंचिद्विरक्त-

---

1. इन्दूदयेन —पा०
2. सकललोकविप्रलम्भचतुरया मिथ्यादृष्ट्या मोहितः —पा०
3. सुनीतिस्तु तेन राज्ञा संयोजयितुम् —पा०
4. त्वय्येवमुपलालिते —पा०
5. कार्यचिन्ता —पा०
6. स्मितं करोति —पा०

7

हृदयस्तिष्ठति। यदयमेवावसरो देवेन देवीं योजयितुम्। (पुरोऽवलोक्य.) जयतु समित्रामात्यो देवः।

राजा—(सादरं पश्यति)

यामु—भद्रे! किंचिदाकुलेव लक्ष्यसे।

सुनी—(स्मितं कृत्वा) यतिराजे महामन्त्रिणि किमाकुला भवामि?

राजा—(विहस्य) सोल्लुण्ठमिव प्रतिभाति।

यामु— तत्तु देवो जानाति।

यति—(सस्मितम) सुनीतिं प्रति किंचिद्रहस्यमिव देवस्य; तदावां बाहिरंगमेव।

राजा—किं चक्षुषी बहिरंगम्?

सुनी—चक्षुषोऽपि राज्ञां सुनितिरन्तरंगमेव।

यति—(स्वगतम) इयमेकान्ते देवमनुकूलयितुमागतैव। तदस्माभिरवकाशो देयः (प्रकाशम) यावन्नियमशेषं निर्वर्त्य समागच्छामः, तावदियं देवं विनोदयतु। (जनान्तिकं) भद्रे! सिद्धमनुवदामि।

युक्तायुक्तनिरूपणं सदृशयोस्संयोजनं क्रुद्धयोः
क्रोधस्योपरमं विधातुमपि ते लीलैव यद्भामिनि!।
तत्संयोजयितुं यतस्व गणिकासंसर्गजातेर्ष्यया
देव्या देवमुदारशीलगुणया नान्या गतिस्त्वां विना॥ १०॥

(इति यामुनेन सह निष्क्रान्तः)

राजा—(सुनीतिं हस्ते गृहीत्वा) प्रियसखि! सत्यमेव ब्रूहि। त्वत्प्रियसखी किमस्मान् गणयति; कदाचिदंगीकरिष्यति वा?

सुनी—तद्देव एव निरूपयतु; स्वदोषः किं प्रत्यर्हतीति। (वि[illegible]न्त्य)

देवी तिष्ठतु सा मम प्रियसखी देव! त्वया चिन्त्यतां
मिथ्यादृष्टिविलाससमोहितमतिः किं किं न कुर्यादिति ।
तत्त्वां द्रष्टुमपि प्रगल्भगणिकाधूर्तं न सम्मन्यते
देवी किं त्वनुनीतिकल्पलतिका देवस्य हस्ते स्थिता ॥ ११ ॥

राजा—देवीं कथमिदानीमपि पश्यन्नानुयामि (सखेदं)

मलयपवनो मर्मच्छेदी मधुव्रतनिःस्वनः
श्रवणपरुषो वर्षत्यग्निं स्फुलिंगमयं शशी ।
भवति च मनश्शल्यं माकन्दभूरुहमञ्जरी
सुमतिविरहे सर्वो लोको भवत्ययमन्यथा ॥ १२ ॥

सुनी—सुमतिसंयोगे पुनरपि सर्वं यथावस्थितं भवत्येव ।

राजा—(विचिन्त्य

आजिघ्रन् मुखपुण्डरीकममलामासज्य गण्डस्थलीम्
आचुंबन् अनुभावयन्ननुभवन् अन्तर्विशन्तीमिव ।
आश्लिष्यन् दृढमापिबन्निव दृशा पश्यन्मुहुः प्रेयसीम्
आत्मानं चरितार्थयामि सखि! तामानेष्यसि त्वं यदि ॥ १३ ॥

सुनी—देव! किमेवं आज्ञाप्रतीक्षे दासजने स्वातन्त्र्यमारोपयसि? सम्यगानीतामेव देवीं द्रक्ष्यसि ।

राजा—(सलज्जम) दुर्मन्त्रिवचनात् ईदृशप्रेमशालिनीं त्वामपि दूरीकुर्वतो मे लालित्यमपि दोषाय ।

सुनी—(सभयम्) देव! मैवं अनुतप्तुमर्हसि । सर्वस्यापि प्रभवति खलु स्वामी । संप्रति देवप्रसादेन कृतार्थाऽहं देवीमपि कृतार्थयामि । (इति निष्क्रान्ता)

राजा—(देवीं विचिन्तयन्)

सासूये शफरीविवृत्तिषु दृशौ शाङ्र्गं न शंकास्पदं
भ्रूवल्ली ललितस्य कैशिकतुला वैदेशिकं शैवलम् ।

को मेरुः कुचमण्डलस्य भुजयोः कोऽन्यन्तरे वल्लरी
शंके चन्द्रकथाऽपि साहसपदे तस्याः स्मृतं चेन्मुखम् ॥ १४ ॥

( परितोऽवलोक्य, ) हा चित्रमेतत् ।

सस्मितमुखारविन्दाः सर्वंकषनयनविभ्रमविशेषाः ।
[1]घनकुचविनम्रमध्याः ककुभः पश्यामि चिन्तयन् देवीम् ॥ १५ ॥

( श्रुतिमभिनीय ) किमेतत् कलनिर्ह्रादीकोऽपि शब्दः कर्णविवरं आह्लादयति ? ( विमृश्य सहर्षम् ) मुखरमंजीरा देवी समागता स्यात् । ( ततः प्रविशति सुनीतिमंसे गृहीत्वा, गीतयाऽनुगम्यमाना सुमतिः )

सुम —हळा ! अंअ उंतंस ( इत्यर्धोक्ते )

गीता —( सभयम् ) देवि ! विरम, विरम । सुमतिरपि किं भरतशापं विस्मरसि !

सुम —( सभयम् ) अम्ब ! चिन्ताकुला नात्मानमपि जानामि । सखि ! आर्यपुत्रस्य कथमात्मानं दर्शयामि, यः पुनरेवमतिकश्मले रथ्यांभसि आत्मानं पातितवान् ।

गीता —[2]भद्रे ! तस्य तादृशवर्धकीसंयोगो निरूप्यमाणः, प्रवादमन्तरेण परमात्मविदो न संभवति; संभवेऽपि नास्य प्रायश्चित्तं पश्यामि । किन्तु, विष्णुभक्तिरूपया भवत्यैव प्रायश्चित्तवान् भवति ।

सुनी —देवि ! भगवत्या वचनमनुपालयस्व ( इति पादयोः पतति )

सुम —( अधोमुखी बाष्पं मुञ्चति )

सुनी —( सपरितोषम् ) सोऽयमभिषेको महाराजमनोरथसाम्राज्यस्य ।

गीता —( पाणिभ्यामश्रु प्रमार्जयन्ती सपुलकोद्भेदम् ) शीतलस्पर्शोऽयमन्तराह्लादमावेदयति ।

---

1 कुचयुगलभारनम्राः –पा०

2. वत्से –पा०

सुनी —इत इतो देवो ।

सुम —सखि ! किमेतदिति न जानामि ।

पादौ जडौ भवति लोचनमश्रुपूर्णम्
कम्पोत्तरं स्तनतटं घनमूरुकाण्डम् ।
कामश्च चेतसि [1]करोति विरोधमन्तः
शक्नोमि गन्तुमधुना न समुद्यताऽपि ॥ १६ ॥

सुनी —(स्मितं कृत्वा) सात्त्विकोऽयं विकारो देवीं जडयति ।

सुम —(विमृश्य सरोषं पश्यन्ती) प्रियसखि ! मुञ्च माम् । [2]अलमुपालंभेन; त्वमपि मानिन्यसि ।

मानं जीवितमामनन्ति सुदृशां तद्भंगमप्याचरन्
दृष्टः खण्डनहेतुभिः स दयितो दृष्टश्च तद्दर्शिनी ।
किं जीवेत् सुमतिः कृतं तव गिरा सर्वं स्हस्वान्यथा
निन्द्या सद्भिरसानि धूर्तगणिकानिर्माल्यभोगादहम् ॥ १७ ॥

उभे —(सभयम्) देवि ! प्रसन्नाऽपि क्षुद्रनदीव किं कलुषोभवसि ?

शून्या त्वं लिखितेव तिष्ठसि वपुः शोभावशेषोकृतं
श्वासोर्मिग्लपितं मुखं तव शरन्मीनोपमं लोचनम् ।
सर्वं वेत्सि विमुञ्च मानिनि रुषं चन्द्रोऽप्ययं साहसी
दृष्टः संशयमागतः स दयितोऽप्यात्मा च रक्ष्यस्त्वया ॥ १८ ॥

सुम —यद्यपि सर्वमिदं जानामि, तथापि स्त्रीस्वभावसुलभो मानो मे निगलीभवति ।

---

1. करोत्युपरोधमन्तः —पा०
2. अतिनिर्बन्धेनालम् —पा०

सुनी —तथाऽप्यस्य[1] कदाचिल्लयो भवत्येव । यतिराजेन सह मन्त्रितमेवं च देवेन— “सर्वमिदं राज्यं देव्या एव; सुमतिवल्लभत्वान्ममापि” इति । किञ्च, मिथ्यादृष्टिस्नेहमपि मिथ्यैव देवस्येति, तत्परिजनवचनमपि किं न श्रद्दधासि ?

सुम —(स्मितं कृत्वा) सर्वं राज्यं दयित एव स्त्रीणाम् । (विचिन्त्य) प्रियसखि ! तस्मिन्ननुस्मृते नाहमात्मनोऽपि प्रभवामि । यत्संप्रति,

तत्कण्ठग्रहणाय धावति पुरो दोर्वल्लरी मां विना
वक्षोजौ मम वल्गतः पुलकितौ तद्वक्षसि क्रीडितुम् ।
चक्षुस्तन्मुखमीक्षितुं जिगमिषत्यात्मेच्छया तद्गतम्
[2]न प्रत्यैति पुनर्मनः कथय मे कार्यं न जानाम्यहम् ॥ १९ ॥

राजा—(चन्द्रं विलोक्य विहस्य च)

कामो मे रिपुरेव चन्द्रमरुतौ ! कामं स मां बाधताम्
युक्तं मां युवयोः किमात्मसुहृदं दग्धुं जगच्छोतयोः ।
प्राप्तं वह्निसखस्य तद्भवतु वा चन्द्र ! त्वया शाम्यतां
नो चे[3]न्मत्सुहृदातिवाहिकसभामध्ये कथं स्थास्यसि ॥ २० ॥

(इति मूर्छति)

सुनी —(पुरोऽवलोक्य, सभयम्) प्रियसखि ! सुमतिरपि किं न पश्यसि; त्वद्विरहातिशयेन देवः किंचिदप्यजानन्नचेतन इव किं विवशस्तिष्ठति । तदेनं आश्वासयावस्तावत । (इति सर्वा राजानमुपसर्पन्ति)

सुनी —(सभयं) हा कामुक ! कृतार्थोऽसि शत्रुहननेन ।

---

1. तथाऽपि—पा॰
2. नाप्यपैति—पा॰
3. नोचेत्त्वं सुहृदातिवाहिक—पा॰

गीता- (सभयम पाणिना स्पृशन्ती ) हा हताऽस्मि, जितं त्रिवर्गेण ।

सुम - हा कान्त! करुणानिधे! मदर्थं परित्यक्तजीवितोऽसि ।

(इति कराभ्यां कण्ठे गृह्णाति । गाढं परिष्वजन्ती मुखमाचुम्बति )

राजा—( सुखस्पर्शं [1]अभिनीय किंचिदुन्मीलति )

गीता — (सानन्दम् ) वत्से! सुमतिस्पर्शेन लब्धसंज्ञ इव देवो दृश्यते ।

सुनी (सस्मितम ) प्रियसखि! पुनरप्येवं कुर्वती कान्तमुज्जीवय ।

सुम —( सविलक्षस्मितम ) विप्रलब्धाऽस्मि प्रियसख्या ( इति राजानमुत्सृजति )

राजा—( सलीलं कण्ठे गृह्णाति )

सुनी —( सस्मितं राजमुखम् अवलोक्य ) प्रियसखि! धूर्तोऽयम् त्वयाऽपि यथेष्टं क्रियताम् । नायमावयोरवसरः ।

( इति गीतया सह निष्क्रान्ता )

राजा – ( करांगुलीकिसलयाभ्यां [2]चिबुकमुन्नमय्य )

मुदितः कदा शयिष्ये मुखमिदमाघ्राय मुकुलितापांगम् ।
मुग्धस्मितं रतान्ते मुक्तातार्टकमुद्रितकपोलम् ॥ २१ ॥

सुम —( सविलक्षस्मितम् ) धूर्ताचरिते पथि वर्तमानः किं मामेवं [3]व्रीडयसि ?

राजा - (पुरो दर्शयति )

कुण्डलितकण्ठनालाः कुर्वन्ति सुखेन [4]घूर्णितापांगाः ।
कण्टकिनि कमलकाण्डे कण्डूयनकेलिमुत्सुका हंसाः[5] ॥ २२ ॥

---

1. नाटयन् –पा०
2. वदनम् –पा०
3. पीडयसि –पा०
4. कूणितापाङ्गा –पा०
5. कण्डूयनमरुणमुखपदा हंसा –पा०

तदत्र सरस्तीरे चन्द्रकान्तमणिमण्टपस्य चन्द्रशालायां क्षणमुपविशावः । ( इति तया सहाधिरोहणं नाटयन्, उपविश्य ) नितम्बिनि! त्वयाऽप्युपविश्यताम् । इत्यनिच्छन्तीं किल तां बलादुपवेशयति )

सुम —पुंसि बलात्कारिणि, अबला किं करिष्यति ?

राजा —( सस्मितम् )

बलात्कृत्य हरन्ती मां विलासस्मितपेशलैः ।
अबलाऽसि कथं देवि ! कटाक्षैरेव केवलम् ॥ २३ ॥

सुम —( सप्रणयकोपं पश्यति )

राजा —( निर्वर्ण्य )

सुमते ! न भवत्येव श्रुतिमार्गानुसारिणी ।
तरले तव नेत्रे च मम चित्तापहारिणी ॥ २४ ॥

सुम —( स्मितं कृत्वा ) सततं मामेवं बहुविधविप्रलंभवचनभङ्गीभेदेन मोहयन्, न कदाचिदपि विश्राम्यसि ।

राजा — छायामिवातपश्रान्तः तृषितो जाह्नवीमिव ।
नीवी(?)मिव दरिद्रस्त्वां कृच्छ्रलब्धां जहामि किम् ॥ २५ ॥

सुम —( विहस्य ) यतिराजे मन्त्रिणि देवस्य किं न सिद्ध्यति ।

राजा --( निर्वर्ण्य )

किं दीपप्रभया किमक्षिसुलभैरत्नांशुभिः केवलं
तत्त्वं तिष्ठतु तेऽपि देवि! भवदायत्तप्रकाशा यतः ।
गात्रं ते कृतमन्यथा यदि भवेदन्यैरलं तद्गुणैः
कान्तिस्ते स्वपरप्रकाशनकरी कान्ते कथं स्यादियम् ॥ २६ ॥

¹ कृशम —पा०

तदेवं स्वभावसुभगे! तवांगे भूषणानि निवेशयन् सौन्दर्यातिशयं प्रकाशयामि। (इति परिजनोपनीतात्समुद्गकाद् भूषणान्यादाय[1] देवीं पश्यन्) अथवा, विसदृशमेव कर्तुमुद्यतोऽस्मि। यदिदानीम्,

काञ्चीकटकमञ्जीरकुण्डलादिविभूषणैः।
भवती किं प्रकाश्येत! भवत्यैव प्रकाशितैः॥ २७॥

तथाऽपि, मंगलाचारः कर्तव्यः। (इति यथास्थानमाभरणान्यर्पयन्, विमृश्य)

कर्णोत्संगविसर्पिणी नयनयोः कान्तिर्वतंसोत्पलम्
लावण्यैकमनोहरोऽयमधरो लाक्षामुपेक्षेत किम्?।
हारोऽपि स्मितचन्द्रिकैव कुचयोरंगप्रभाकञ्चुली
तन्व्याः केवलमंगभारमधुना मन्ये परं भूषणम्॥ २८॥

(सप्रणयकौतुकं निर्वर्ण्य,) अयि, करभोरु!

हाराणि स्तनमण्डले किमधरे लाक्षाणि किं गण्डयोः
किं क्रीडामणिमण्डलानि दयिते किं वा भवेयं तव।
माहेन्द्रं पदमप्यलंधि महितैः यत्र स्थितैर्भूषणैः
मन्ये नेदृशभाग्यसंपदथवा मामेव[2] मा सीदति॥ २९॥

सुम—कान्त! किमेवमाकुलयसि? भर्तैव खलु नारीणां प्रथममाभरणम्?

राजा—(सस्मितम्, वर्णतूलिकामादाय वामकरांगुलिपल्लवाभ्यां वदनमुन्नमय्य तिलकमारचयन्) अयि प्रिये! चन्द्रमुखि!

धातुद्रवैर्विलिखितं तव फालमध्ये
पद्मं मया सुरभिकेसरपत्त्रजालम्।
चन्द्रे सरोजमवलोकितुमादरश्चेत्
आलोकयस्व मुकुरे मुखमण्डलं ते॥ ३०॥

---

1. उद्धृत्य—पा०
2. मां नैवमासीदति—पा०

सुम—त्वमेव मे चक्षुः । [1]किं न पश्यामि ।

राजा—( वर्तिकान्तरं गृहीत्वा, विलिखन्, सत्त्वसंक्षोभमभिनीय ) देवि! किमिदानीं क्षीणपुण्यः करोमि, अमृताहारसमये गृहीतहस्तोऽस्मि । यदिदानीम्,

कस्तूरिकास्तव पयोधरमण्डलेऽस्मिन्
गण्डस्थले च गरुडध्वजलांछनानि ।
लीलाऽलसं लिखितुमद्य मम प्रवृत्तं
पापो रुणद्धि करपल्लवमेष कम्पः ॥ ३१ ॥

देवी—( सोत्प्रासम् ) किं तां [2]विदग्धशंभलीमनुसरसि ?

राजा—( सजुगुप्सम् ) देवि ! सुमतिरपि किमेवममृतमध्ये हालाहलमवकिरसि ?

देवी—( ससंभ्रमम्, लीलारविन्देन नेत्रपातिनं मधुकरं निवारयति )

राजा—( सविलक्षमञ्जनतूलिकामुद्यम्य )

इन्दीवरार्थीव मधुव्रतोऽयं भ्रान्तोऽस्मि यस्मादहमुत्पलाक्षि ! ।
नेत्रोत्पले संप्रति भूषयंस्ते कर्णोत्पले कज्जलमालिखामि ॥ ३२ ॥

देवी—तत्त्वविदस्तव कुतो विभ्रमः ?

राजा—( अधरपल्लवमलक्तकेनालंकुर्वन् विचार्य )

[3]कस्तूरिका कनकशुक्तिनिभे कपोले
कान्तिं करोतु परभागविशेषरम्याम् ।
माणिक्यभासि मदिराक्षि ! तवाधरेऽस्मिन्
लाक्षा परं भवति कोऽपि कलंकभेदः ॥ ३३ ॥

तदेनमपनयामि ( इति मल्लपन्, अधरपल्लवमास्वादयितुं कण्ठे सलीलं गृह्णाति )

---

1. किमन्यत्पश्यामि—पा०
2. विश्रंशंभलीम्—पा०
3. कर्णोत्पलम् कनकशुक्ति - पा०

(नेपथ्ये)

जय जय नरसिंह नारायणानन्त तुभ्यं नमो
जय जय भुजगेन्द्रशायिन् सुखं योगनिद्राऽस्तु ते ।
जय जय तव सुप्रभाता निशाऽस्तु प्रसीद प्रभो !
जय जय करुणानिधे जागृहि श्रीपते ! जागृहि ॥ ३४ ॥

अपिच— जय जय भगवन् ! प्रसीद प्रपन्नार्तिहारिन् हरे !
विरमतु तव योगनिद्राविनिद्रा, रविन्दोपमाम् ।
मयि वरद ! निधेहि दृष्टिं, समुत्तिष्ठ शय्यातलात्
फणिपतिमधितिष्ठ भद्रासनं भद्रमेवाऽस्तु ते ॥ ३५ ॥

राजा—(अश्रवणं नाटयति)

देवी—(सभयम्) महाराज ! समुत्सृज माम् । अलमतिप्रसंगेन । भद्राय ते भवतु भगवतः प्रभातभोगावली ।

राजा—(सखेदम्) अमृतास्वादवेलायामवसिता शर्वरी ।

(पुनर्नेपथ्ये)

जय जय महाराज ! भवतः सुप्रभातमस्तु ।

चन्द्रो मण्डलमात्रशेषविभवः छायाविरामादयं
सम्मीलन्ति च तारकास्तत इतः सत्तावशेषं तमः ।
प्रत्यासीदति भानुमानपि दिशं प्राचीनबर्हिष्मतीं
निद्रां मुञ्च कुरुष्व देव ! कुशलिन्लोत्सवं प्राणिनाम् ॥ ३६ ॥

देवी—(विहस्य) सुमतिसंगतस्य कुतो निद्रा देवस्य ?

राजा—(सस्मितम्) देवि ! निद्रासंगमपि मे किं मृष्यति भवती ।

देवी—वयमपि प्रातःकालनियमनिर्वर्तनाय गच्छामः । (इति देवेन सह निष्क्रान्ताः सर्वे,)

इति घटिकाशत श्रीमद्वरदाचार्यविरचिते "यतिराज-
विजये" सुमतिक्रीडा नाम चतुर्थोऽङ्कः ।

---

# पञ्चमोऽङ्कः



( ततः प्रविशति सुदर्शनः )

सुद —( विमृश्य ) यतिराजप्रेषितेन मया [1]पथिकमुखान्मायावादवृत्तान्तो विदितः। यथा किल—मायावादः शंकरं पुरस्कृत्य केरलैस्संभूय संकटस्थाने दुर्गामाराध्य तत्प्रसादलब्धविविधमायायुक्तिशक्तिविभवो रामानुजविजयाय मेघनाद इव प्रस्थितः । तत्सार्थमुद्यतावपि वृद्धौ ध्याननियोगवादी निष्प्रपंचीकरणनियोगवादी च शंकरद्वेषान्निवृत्तौ । वाक्यार्थज्ञानवादिनौ च शंकरशिष्यौ जीवबहुत्वैकत्वे प्रति परस्परं कलहायमानौ क गताविति न ज्ञायत इति । तदिमं वृत्तान्तं गुरवे निवेदयामि ।

( इति निष्क्रान्तः विष्कंभः )

( ततः प्रविशति संक्रुद्धः सन्यासी शुकपटश्च )

सन्या —भो भो दुरात्मन् ! शंकरश्रीपादशिष्योऽपि किमेतां यज्ञोपवीतवत् कण्ठग्राहिणीं भेदवासनापिशाचीं च न मुंचसि, ?

शुक —( सरोषम् ) अनात्मज्ञ ! प्रच्छन्नबौद्धसन्यासिन् ! मर्मज्ञं मामपि किं प्रकोपयसि ? नग्नालंकरणन्यायेन अवैदिकं ते दर्शनम् । निर्वाणनिष्ठं प्रतिनियतबन्धमोक्षादिवादिभि[2]र्भेदवाक्यैरलंकर्तुं काशंकुशमवलम्ब्य जीवभेदं परिकल्पयामि । तदपि न मृष्यसि ?

सन्या —( सक्रोधं दन्तान् संपीड्य ) कथं मृष्यामि दुस्तर्कवादिनस्ते पाण्डित्यम् [3]तर्हि ब्रूहि ब्रह्मण्येकपत्नीव्रतं धारयन्त्यविद्या, कति कति वा जीवचण्डालान् आलिंगति ?

---

1. पथिकवेषेण —पा०

2. वेदवाक्यैः —पा०

3. तावत् —पा०

शुक —त्वमेव तावद्ब्रूहि, अज्ञानरूपेयमविद्याचण्डाली ज्ञानरूपं ब्रह्म कथंकारं शिरसि गृहीत्वा ताडयति ?

सन्या -(सक्रोधसंभ्रमं, शिखायां ब्रह्मसूत्रे च गृहीत्वा) द्वैतपातालपतितधूर्तप्रलापनिस्ते दन्तखण्डनं करोमि । (इति दण्डक[1]मुद्यच्छति)

शुक – (सक्रोधं पश्यन्) कथमेनं सर्वाश्रमपरिभ्रष्टं गृह्णामि ;

न शिखा नोपवीतं च न स्पृहा चास्य वाससि ।
गळ एव गृहीत्वैनं पतितं पातयाम्यहम् ॥ १ ॥

(इति गळे हठाद्गृह्णन् , पुरोऽवलोक्य, सभयम्) कथमिहैव राजा समागच्छति। तदितो गच्छामि। (इति तमाक्रोशन्तमेव अनुकर्षन् निष्क्रान्तः)

(ततः प्रविशति राजा देवी च)

राजा —(समन्तादवलोक्य सकौतुकम्) देवि[2] ! दीयतामितो दृष्टिः ।

सदयं स्पृशन् कराग्रै रागी कण्टकितगात्रलतिकायाः ।
पातुमिवेच्छति भास्वान् पद्मं मुखमिव विकासि पद्मिन्याः ॥ २ ॥

राजा —(साभिलाषं देवीमुखं पश्यति)

(नेपथ्ये)

रे रे राजकुलवासिनः परिस्पन्दाः !

सन्त्येवान्येऽपि लोके सकलबहुमतद्वैतविद्यावलेपाः
किं तैरद्वैतगन्धद्विरदमदमरुन्मात्रविस्तच्चित्तैः ।
भाट्टप्राभाकरादिप्रतिभटसमयप्राणसर्वस्वहारी
संप्राप्तः शंकरो[3]ऽयं क्व नु खलु वसति ब्रूत रामानुजो वः ॥ ३ ॥

देवी —(तच्छ्रुत्वा सभयोत्कम्पम्) कोऽसौ महाराक्षसः ? (इति ससाकुला राजानमालिंगति)

---

1. दण्डमूलम् —पा०
2. देवि, पश्य पश्य —पा०
3. शङ्करोऽहं, क्व खलु स वसति —पा०

राजा मानिनि ! मयि स्थिते किं भयेन ? (ततः प्रविशति सशिष्यो रामानुजः, मुनीन्द्रतिर्यांमुनश्च)

रामा —(सावष्टम्भम्) महाराज ! सुमत्या सह विहरन् विजयस्व । तिष्ठामि खलु, ते [1]धीरस्य धीरत्वमुपलालयितुम् ।

(पुनर्नेपथ्ये)

वल्गत्खड्गनिपातनिष्ठुरमहातर्काभिघातत्रुटद्
द्वैतग्रन्थिसिरामुखस्रवदसृग्धारासमाराधिताम् ।
कालीं केरलकेलिकल्पलतिकां कालानलोद्गारिणीम्
प्राप्तः प्रीणयितुं प्रवादुकशिरोमुण्डोपहारैरहम् ॥ ४ ॥

रामा —(विहस्य,) महाभैरवमन्त्रसिद्धो[2] मायावादः, शंकरसहितः केरलदेशादागत्य, गर्जति ।

(ततः प्रविशति शंकरभुजावलंबी संरब्धो मायावादः)

शंक —(सरोषं पश्यन्) कोऽयं रामानुजो नाम ?

सदूह —यच्छिष्योऽहमस्मि ।

शंक —तमेव वेदितुमिच्छामि ।

सदू —वादप्रतिभुवि मयि स्थिते किमस्मद्गुरुमन्वेषयसि ? न हि कण्ठकः पादुकामभिंदन् पादतलमुल्लिखति ?

शंक —(सावज्ञमन्यतोऽवलोकयति)

सदू —(सक्रोधम्) जाल्म ! किं मामवजानासि । अरे !

सप्तद्वीपप्रदीव्यत्सकलजनमतिच्छादनेच्छासमुद्यन्-
मायासिद्धान्तकन्थाशतलवनकलाकर्तरीवृत्तिरेषः ।
सप्तव्यूहः सदूहः सदसि यतिपतेः तन्त्रपालस्त्वया किं ?
दृप्यद्दुर्वादिगर्वक्षपणमखविधौ दीक्षितो नेक्षितोऽहम् ॥ ५ ॥

---

1. वीरस्य लालित्यमुपलालयितुम्—पा०
2. मन्त्रसम्भृद्धः—पा०

शंक —( सामर्षं तिर्यग्विलोकयन् ) कथं न पश्यामि ? अस्ति खलु मे शंकरस्येव दुष्टनिरीक्षणे तेजोमयं तार्तीयीकं चक्षुः ?

सदू —( विहस्य ) तदपि ते चैद्यस्येव[1] रामानुजं प्राप्य विरंस्यति ।

शंक --तमेव वेदितुमिच्छन्नपि न तं पश्यामि ।

माया —वत्स ! गृहीतदीपोऽपि गर्तं किं न पश्यसि ? अहमेव विवेचयामि । दुरूहोऽयम्, अस्माभिर्वेदमौळिप्रकाशान्निरस्त इदानीं सदूहो भवति । सुमति-सखी सुनीतिरेषा, या दुर्नीतिरिति दुहित्रा मे निराकृता । अयमेव स यामुनः, योऽयं मित्ररूपो शत्रुः, अन्धकूपे जीवन्तं महाराजं गजमिव [2]पातितवान् । वत्स ! परिशेषाद्यमेव स इति निश्चीयताम् ।

शंक —( निर्वर्ण्य, स्वगतम् )

अतिमानुषोऽयमस्य प्रथयत्याकार एव महिमानम् ।
सलिलमिव मेरुसिन्धोर्निर्मलमन्तर्गतं महारत्नम् ।। ६ ।।

तदिदम् अत्यद्भुतम् ज्योतिः परैरनभिभवनीयमेव । (प्रकाशम्) ( सरोषम् चक्षुषी परिवृत्य) अहो ! अतिचिरप्रार्थितो महानागो गरुडस्य चक्षुर्गोचरी-भवति ।

सदू —[3]एवमेव

माया —( सरोषमेनं पश्यति )

शङ्करः—अयमिदानीम्,

कल्पान्तकन्दळितसागरवीचिमालासंरम्भडम्बरविडम्बिभिरस्मदीयैः ।
संक्षोभितस्सपदि यास्यति युक्तिजालैः [4]वातूलधूतनवतूलगतामवस्थाम् ।। ७ ।।

1. शिशुपालस्येव -पा०
2. पातयति -पा०
3. सुतर्कः -पा०
4. वा लवेगहततूलगताम् - पा०

माया—(सरोषधैर्यम् महामन्द! मदीयं पदमधिष्ठाय महाराजस्य मृदुहृदयं मोहयन्, संशप्तके मयि सन्नद्धे स्थितेऽपि मतिनीतिकौशलं किं न दर्शयसि?

परस्परमहातर्कखड्गसंघट्टजृम्भितैः ।
स्फुलिंगैरस्तु खद्योतैर्विद्योतितमिदम् नभः ॥ ८ ॥

सदू—(सरोषम्) कामं संशप्तको भव । रामानुजशिष्यः किमहमपार्थोऽस्मि?

यामुनः—किं न्यायतर्कनिपुणैः कृतवादकेळिः
अन्यान् प्रतीपयति हन्त! यतीन्द्र एषः ।
कण्ठीरवः पतति किं करियूथयोधी
संघेऽपि सम्मुखनिपातिनि सैरिभाणाम् ॥ ९ ॥

शङ्क—(सरोषसंरम्भम्) भो! किमुक्तवानसि? किंप्रसक्तोऽपि कश्चिदस्ति विपश्चित् तर्कनीतिनिपुणः?

अश्रूयन्त न किं त्वया मम मुहुः पुङ्खानुपुङ्खोत्पत-
त्तर्कातर्किविहारभैरवरवा[1]श्चण्डा वितण्डाहवाः ।
यत्संरम्भनिरीक्षणक्षणगलत्संरब्धकर्णार्जुन-
स्पर्धादुर्धरयुद्धदुर्मदभुजप्रेक्षादरो नारदः ॥ १० ॥

यति—(यामुनमुखं पश्यन्, स्मितं करोति)

यामु—सर्वः स्वात्मानं श्लाघत एव ।

यति—भगवन्! मैवं शंकरमवधारय । स्वात्मनिरपेक्षमेव समयान्तरकलहेषु अयमभिपतति ।

[2]सदू—(विहस्य) तर्हि स्वव्याघातं न जानात्येव ।

रामा—तथा सति स्वात्मानं अरक्षन् परघाती वीर इव[3] नश्यति ।

1. भैरवरवोच्चण्डा—पा०
2 सुतर्कः—पा०
3. वीरोऽपि—पा०

सुतर्कः—सर्वं मिथ्येति वदतः, प्रथमं स्ववचनमेव मिथ्या स्यादिति, परपक्षोऽस्मन एव विजयीभवति।

सुनी—व्रीहिकोशः स्वात्मानमदग्ध्वा किं गृहं दहति ?

माया—(विहस्य) सर्वं खण्डयतः स्ववचनं खण्डनीयमिति तत् परेण खण्डन-युक्तिभिरेव खण्ड्यमानं सुतरामभिमतमेव।

सुनी—तर्हि, विजयफले वादे, पराजयोऽपि फलं भवत्येव।

[1]सदूहः—(साट्टहासम्) युद्धयतो वीरस्य स्वहस्तादाच्छिद्य शस्त्रं तेनैव परेण स्वशिर-श्छेदः किमभिमतो भवति ?

शंक—(विहस्य) न किंचिदेतत्।

राजा—(देवीं पश्यन्) तन्त्रपालः सेनापतिः सम्यगुत्तरं दिशति।

देवी—
आज्ञाभंगो नरेन्द्राणां [2]विदुषामुक्तिदूषणम्।
पृथक्शय्या च नारीणाम् अशस्त्रवध उच्यते॥ ११॥

माया—(ससंरंभम्) भो भो [3]महावावदूकाभिमानिन्! मयि पुरःस्थिते किं कुतर्क-विष्फुलिंगान् विकिरसि ?

पादाघातकिरीट[4]घर्षणमहामुष्टिप्रहारव्यथा-
मुह्यन्न्यायमुखच्युतेन रुधिरोद्गारेण शाम्यन्नपि।
क्रोधाग्निर्मम [5]दुर्मदस्तव यशः सर्पींषि पीत्वा जग-
त्युत्सर्पन्ति यतीन्द्रनिर्भरकथादर्पोऽयमुत्सर्पति॥ १२॥

शंक—(विहस्य) अस्तु नाम, अद्वैतवादिनं प्रति न किंचिदेतत्।

[6]सदू—रामेण रावण इव रामानुजेन जीवन्मुक्तोऽसि।

1. सुतर्कः—पा०
2. अवज्ञा विदुषां तथा—पा०
3. महावादुकाभिमानिन्—पा०
4. किरीटकर्षण—पा०
5. वाङ्मयः—पा०
6. सुतर्कः—पा०

यति —( ससंरंभम् ) [1]वृथा वाचाटपौंड्रकाद्वैतिन्! किं मां सुदर्शनं न जानासीति संनह्यति ?

सदू —भगवन्नलमतिसंरंभेण । [2]महोरगे निपतन् गरुडः किं मण्डूके निपतति ? ( ससंरंभम् ) परिवृत्य,

[3]यद्येको भुवि सर्वधुर्वहमतिर्वैतंडिकस्त्वद्गिरां
गर्वं [4]खंडयितुं यतीश्वरचमूनासीरधूलीलवः ।
सन्नद्धोऽहमवस्थितोऽस्मि शतशस्तर्काऽसिधाराहति-
क्रीडाखण्डितचण्ड[5]हैतुककथाकण्डूलजिह्वालतः ॥ १३ ॥

शङ्क —साधु, वटो! साधु । लघुरपि विस्फुलिङ्ग इव दीप्तोऽसि ।

त्वया सह त्वदाचार्यं मदुक्तिः खण्डयिष्यति ।
कञ्चुके पातितः खड्गः न स्पृशेत् किं कलेबरम् ॥

तथापि, मतङ्गजमेव लक्षीकुर्वन् मृगपतिः [6]महिषे किं निपतति ? (समन्तादवलोक्य,)

मदुक्तिबाणनिर्भिन्नं दृष्ट्वा रामानुजं नराः ।
द्विनेत्रमपि मां प्राहुः त्रिनेत्रं भुवि शङ्करम् ॥

सदू —( साट्टहासम् ) संरम्भाकुलितेन भवता विपरीतमभिधीयते ।

[7]स्वोक्तिसुस्थिरबाणोऽपि त्रिणेत्रो युधि शङ्करः ।
रामानुजेन बलिना जितो दृष्टो हि नान्यथा ॥

---

1. वृथाविकत्थनपौंड्रकाद्वैतिन् –पा०
2. कररुहसाध्ये कथं नाम कुठारव्यापारः –पा०
3. यद्यैको –पा०
4. खण्डयिता –पा०
5. चण्डवादुककथा –पा०
6. मार्जारे –पा०
7. सपक्षेणैव बाणेन शायितो युधि शङ्कर. –पा०

शङ्क —दुर्विदग्ध! वाचाट! वटो! किं विकत्थसे। (सक्रोधसंरम्भम्) सर्वेऽपि मां पश्यन्तु।

ब्रह्माणः कति[1] वा न सन्ति जगतीनिर्माणपौनःपुनी-
पारीणाः परमाणवोऽपि कति वा लोकत्रयारम्भकाः।
तत्तत्तत्त्वविखण्डिषा परिपतन्मद्युक्तिकालानल[2]-
ज्वालातत्क्षणभक्षितस्य जगतो भस्मापि न स्मर्यते॥

मुनी —(कर्णौ पिधाय) दुस्सहान्यमूनि वाक्यानि, स्फुलिङ्गमभिवर्षन्ति।

रामा —(विहस्य) वाङ्मात्रेणापि वराकस्तुष्यतु।

सदू —(सक्रोधं पश्यन्) मयि स्थितेऽपि महापुरुषसन्निधौ किं प्रलपसि?।

माया—(ससंरम्भम्)

ब्रह्मास्त्रमेकमादाय समितौ विहरन्नहम्।
खण्डयामि जगत्सर्वं पाण्डित्यं मम दृश्यताम्॥

यस्मिन्नध्यस्तमेतत्त्रिभुवनमखिलं यच्च पश्यत्यविद्या-
मुग्धं स्वाध्यस्तमेतद्यदपि निजवपुर्वीक्षणे मुच्यते यत्।
ज्ञानं ज्ञेयादिहीनं भवति यदपदं संविदां निर्विशेषं
सत्यं तद्ब्रह्म मिथ्या, तदितरदखिलं कोऽन्यथा वक्तुमीशः॥

(इति भुजमास्फोटयति)

यति —(सस्मितं सदूहमुखं पश्यति)

सदू —(ससंरम्भं भुजमास्फोटयन्,) अहमीशोऽस्मि। आकारभेदसम्पाद्यमेतदखिलं निर्विशेषवस्तुवादिनस्ते न सम्भवति।

सुम —(सहर्षम्)

सम्यगेकोत्तरेणैव सप्तार्थानच्छिनत् सुधीः।
प्रत्येकं सालभेदाय न रामस्सन्दधे शरान्॥

---

1. कति नाम सन्ति —पा०
2. मद्युक्तिवज्रानलज्वाला —पा०

माया —( विहस्य ) किमत्रानुपपन्नम् । अस्ति खल्वस्माकमविद्याकामधेनुः ।

सद् —( विहस्य ) कष्टं भोः,

आरोपयितुमेवास्य धर्मान् बत निराकरोः ।
ब्रह्मणि ज्ञानशक्त्यादिगुणान् स्वाभाविकानपि ॥

किञ्च,

नाध्यासः स्वप्रकाशे तिमिरमिव रवौ ज्ञानबाध्या च माया
न ब्रह्मज्ञानरूपं स्थगयति न ततो बन्धमोक्षौ च तस्य ।
न ज्ञानं ज्ञेयहीनं न सदमतिपदं निर्विशेषं न किञ्चित्
सत्यं [1]स्यान्मानसिद्धं जगदपि न यदि स्वोक्तिबाधादयस्स्युः ॥

किञ्च,

प्रत्यक्षप्रभृतिप्रमाणविदितं सत्यं च भिन्नं जगत्
बाधस्तस्य न केनचित् स्वविहतेर्ब्रह्मात्मकं तज्जगत् ।
द्वैताद्वैतगिरो विभिन्नविषया बाधाय नालं मिथः
पश्वालम्भनिषेधवाक्यवदतो विश्वापलापः कुतः ॥

रा —( सुनीतिमुखं पश्यति )।

सुनी —सप्तसु पदेषु सम्यगुन्नीतो दोषः ।

सुम —( विहस्य ) मायावादसासपदीनमपि समाप्तमेतेन देवस्य ।

माया —( [2]जनान्तिकम् ) अयि वत्स, दुरात्मा सम्यगुत्तरं [3]ददाति, न हि विधिबाधो निषेधेन ?

शङ्क —( सविषादम् ) किं कुर्मः ; संप्रति धाष्ट्र्यमेव नश्शरणमस्तु, जातयः प्रयुज्यन्ताम् ।

---

1. सत्यं ह्यजानसिद्धम्—पा०
2. अपवार्य —पा०
3. दिशति—पा०

तन्त्रपालः—(निरूप्य) भवदभिमतं जानामि । माधवसमये किं जातिच्छलजालेपः परिस्फुरति ? निपुणमतिनिरूपणीयमेतत्तिष्ठतु ।

इदमित्थमिति ज्ञेयं निर्विशेषमिति ब्रुवन् ।
माता वन्ध्या ममेत्यत्र हन्त लज्जेत किं भवान् ॥

(नेपथ्ये)

रे रे! कः पुनरेवमस्मत्सुहृदमास्कन्दति, सानुबन्धमेव वेदमौळिं बन्दीग्राहं ग्रहीतुमागतोऽसि ।

शङ्क —(श्रुत्वा, सहर्षं निष्क्रम्य, पुनः प्रविशति)

माया—किमेतत् ?

शङ्क —मिथ्यादृष्टिप्रोत्साहितो योगाचारः अस्मत्प्रियचिकीर्षया राजद्वारं निरुणद्धि ।

सुम —(भयाकुला भर्तारमालिङ्गति)

राजा—(सधैर्यम्) अयि प्रिये! किमाकुलासि ?

विरमतु तव भीतिर्वेपमानाऽसि किं त्वं ?
विमतवनदवाग्निः वेदमौळिः किलाहम् ।
सुमतिरसि, सुनीतिः त्वत्सखी, तत्समेता
विहर, सति यतीन्द्रे विद्यते किं भयं ते ? ॥

(प्रविश्य प्रतीहारी)

प्रती —(साञ्जलिबन्धम्) देव! परकालपराङ्कुशादयः साभिसरा द्वारि तिष्ठन्ति ।

यति —पराङ्कुशः प्रविशतु परकालादिभिः; परे निरस्यन्ताम् ।

प्रती —यदाज्ञापयन्ति गुरवः । (इति निष्क्रान्ता)

(ततः प्रविशति पराङ्कुशः । सर्वे यथोचितमुपविशन्ति ।)

यति —(सहर्षम्)

शठकोपमुनिस्स एष साक्षात् पुरुषं पश्यति पुण्डरीकनेत्रम् ।
अनपेक्षितवर्णभेदमस्मात् अवतेरुस्त्रय्यागमान्तसाराः ॥

पराङ्कुशः —देव ! सपरिवारो विजयस्व ।

राजा—(सादरं पश्यति)

परा —(परिवृत्य सामर्षम्, मायावादं प्रति राजानमङ्गुल्या निर्दिशन्)

दृश्यं निन्दति दर्शयन्नपि परं ज्योतिर्जगत्कारणम्
मोक्षोपायमुदीरयन्नपि मृषा संसारमोक्षाविति ।
ब्रूते भेदपरायणोऽपि तमपि द्वेष्टि त्वदायत्तधीः,
(विहस्य) किमतः परं कौटिल्यं दौष्कुल्यम् ;
मायावाद ! वदत्यलीकमिति च [1]प्रत्यायितोऽयं त्वया ॥

तदेवं लवणाकर इव कर्पूरं सर्वजगत्प्रमाणभूतं राजानमन्यथाकुर्वन् किं फलं प्राप्नोषि ?

सुतर्कः-(सोल्लुण्ठम्) सामन्तभद्रपीठं प्राप्तम् ।

मुनी —तथागतोऽयं सर्वार्थसिद्ध एव ।

माया—(विमृश्य, सक्रोधम्) किमहं सुगत एव ?

मुनी —(विहस्य) दुर्गतश्च ।

सुत —सर्वज्ञस्त्वमेव तन्निरूपय ।

शङ्क - भगवन् ! विरम्यताम् । अतिप्रसंगस्तिष्ठतु ।

मुनी —(विहस्य) एवमनामन्त्रयन् शङ्करः कथं सर्वज्ञः स्यात् ।

यामु —काममन्यथा करोतु ।

मन्त्रिषु न्यस्तभारोऽयं न तद्दोषेण दुष्यति ।
स्फटिकः किं प्रदुष्येत वर्णभेदैरुपाधिजैः ॥

यति —भगवन् पराङ्कुश ! निरङ्कुशवृत्तयोऽमी निरस्यन्ताम् ।

परा —कः पुनरेतयोर्दण्डः ।

---

1. प्रत्यापितोऽयम् —पा०

यति — शिखोपवीतच्छेदो[1] हि दण्डो दुष्टद्विजन्मनाम् ।
[2]स तु प्रागेव दैवेन द्वयोर्विश्वमुषोरभूत् ॥

पश्चादपि एवंविधान् यतीन् इन्द्रस्सालावृकेभ्यः प्रयच्छति ।

शङ्क — भगवन् पराङ्कुश ! महाद्वैतपक्षपातिन् विष्णुभक्तोऽसि; सोऽहं भावनातिशयेन जीवन्मुक्तो मुकुन्द एव ; मयि न पापं कर्तुमर्हसि ।

सदू —(विहस्य)

सोऽहंभावनया सुरासुरशिरःकोटीरकोटीलस-
द्रत्नालोकविलोकनीयचरणद्वन्द्वो मुकुन्दो भवान् ।

केनादर्शि,

मुनी — किमात्मनैव ददृशे,

सदू — तद्ब्रूहि सत्यं स्वराड्

किं मुह्यत्किमु दुःख्यति (विहस्य)
स्फुटमहो कोऽप्येष केलिक्रमः ॥

परा —(सरोषम्) स्वस्वामितादात्म्यभावनापातकिन् ! किं पौण्ड्रकवृत्तान्तं न शृणोषि ?

वासुदेवोऽहमेवेति पौण्ड्रवत् त्वमपि ब्रुवन् ।
सुदर्शनेन दुर्दशः क्रियसे जितकाशिना ॥

(नेपथ्ये)

मयि तिष्ठति को वा विज्ञानवादिनमधिक्षिपति ?

चिन्मात्रमावयोस्तत्त्वं मिथ्यैवाऽऽविद्यकं जगत् ।
तत्तु मितस्य मे नित्यं चिन्मात्रं क्षणिकं मम ॥

---

1. शिखोपवीतत्यागो हि –पा०
2. कृतः प्रागेव –पा०

यद्वा, निर्विशेषाभिमानी नित्यत्वादिधर्मं कथं ब्रूयात् ?

(पुनर्नेपथ्ये)

यद्वैभाषिकभाषितं यदपि वा सौत्रान्तिकैस्सूत्रितं
योगाचारविचारणा च सरणिः सिद्धान्तसौधस्य नः ।
तद्विज्ञानं च मृषैव विश्ववदिति व्यक्तं ब्रुवन्निर्भयो
मत्पार्श्वे भव नान्यथा तव गतिः [1]विश्वापलापार्थिनः ॥

सुत — (श्रुत्वा सक्रोधम्) किं युवां योगाचारमाध्यमिकौ ? रक्षतमात्मानं द्वयोरयमेको रामशरः ।

स्ववाग्विरोधस्सत्या चेत् सर्वं शून्यं मृषेति वाक् ।
सर्वं जीवत्यसत्या चेत् मृषासर्पेऽस्ति किं विषम् ॥

सुनी - (साकूतं मायावादमुखमवलोक्य) वृश्चिकघातेन विषधरोऽपि हतः ।

माया —(सलज्ज[2]मवाङ्मुखस्तिष्ठति)

परा - (सरोषम्) किं युवां बौद्धस्य सुहृदौ । (इति दण्डं गृह्णाति)

उभौ —(सभयं निष्क्रान्तौ)

सुम —अद्याहमाश्वस्ताऽस्मि, यदाभ्यां सह महाराक्षसी मिथ्यादृष्टिरपयाति ।

सुत —अत्र लब्धासिके सति रामानुजे, मायाविलासिनी कथमानसिका न स्यात् ?

सुनी —न हि रजनीविरामे तिमिरावलिस्तिष्ठति ।

राजा —नष्टेऽपि सर्पे सर्पभयमनुवर्तत एव ।

यति— (यामुनं पश्यन्) आर्य ! किञ्चिद्विशेषस्तिष्ठत्येव ।

(ततः प्रविशति यादवो दण्ड[3]कमण्डलुधारी पुस्तकवाचकशिष्यश्च)

1. दृष्टापलापार्थिनः —पा॰
2. अधोमुखः —पा॰
3. कमण्डलुवाहः पुस्तक —पा॰

याद —  तर्कन्यायतरङ्गलङ्घितजगद्दुर्वादिगर्वानलः
सर्वाम्नायतदङ्गमङ्गलमहामाणिक्यदीपाङ्कुरः ।
मादृक्षो यदि कश्चिदस्ति सचिवः श्रीवेदमौळेरयं
प्रत्युद्गच्छतु तन्मदं शमयितुं प्राप्तो यतिर्यादवः ॥

(सर्वे सादरं पश्यन्ति)

याद —वत्स, वादिसिंह! पठ्यतां वेदान्तविषयसंग्रहश्लोकः ।

शिष्यः—  ब्रह्मैकं तत्त्वमेतद्बहुविधचिदचित्तन्नियन्तृप्रभेदात्
तत्तच्छक्तिस्वरूपं परिणमति यथा वारिफेनादिरूपम् ।
[1]सत्त्वं सर्वानुवृत्तं मणिषु परिमलन्यायतोऽचित्पदार्थे
चैतन्यं स्वप्रकाशं श्रुतिरिह विषये स्थापिता यादवेन ॥

याद —अस्यायमर्थः—सच्चिदानन्दमयं ब्रह्मैव तत्त्वम्; तच्च तत्तच्छक्तिमयं भोक्तृभोग्यनियन्तृरूपेण परिणमति; यथा फेनबुद्बुदतरंगरूपेण वारि; कारणभूतं ब्रह्म, गुणः चैतन्यं रत्नगन्धन्यायेन क्वचिदचिद्वस्तुनि विद्यमानमपि न प्रकाशते; कारणात्मना सर्वमभिन्नम्, कार्यात्मना च सर्वं भिन्नम्, यथा घटशरावादि । भेदाभेदश्रुतयश्च अस्मिन्नर्थे व्यवस्थाप्यन्ते ।

सदू— (विहस्य साट्टहासम) किमेवं महाराजविषयं, मन्त्रीश्वर! विप्लावयसि ।

निर्विकारश्रुतिर्ब्रह्म सविकारं न मृष्यति ।
जीवनित्यत्ववादोऽपि तत्कार्यत्वे प्रकुप्यति ॥

एवमन्यानप्यर्थान् उन्मूलयन् महाराजसमीपे न स्थातुमर्हसि ।

याद —(स्वनीतिविप्लवं परामृशन् अधोमुखस्तिष्ठति)

परा —देव! राजद्रोहे महति को दण्डः?

राजा—(स्मितं कृत्वा) यतिदण्डं यतिराज एव जानाति ।

यति —(यामुनं पश्यति)

---

1. तत्त्वम्—पा०

यामु —शमदमाद्यात्मगुणोपेतस्यापि दुष्टस्य परिव्राजो देशाद्विप्रवासमन्तरेण नान्यो दण्डः ।

याद —(सप्रश्रयम) देवपादसेवापरित्यागात् प्राणपरित्याग एव सुलभ इव प्रतिभाति ।

राजा—तर्हि रामानुजस्ते शरणमस्तु ।

याद —(यतिराजस्य पादयोः पतति)

यति —(समन्तादवलोक्य)

सदोषो वाऽप्यदोषो वा मामेष शरणं गतः ।
भवद्भिर्भगवत्कल्पैर्महद्भिरनुगृह्यताम् ॥

राजा—(सहर्षम्) न केवलमेष एव ; कृतसकलकिल्बिषोऽपि यो भवदभिमान-विषयः, सोऽस्मद्विषयवासिभिस्सर्वैश्शिरसा माल्यवद्धार्यताम् ।

यामु —तथैवास्तु । (आकाशे पुष्पवृष्टिः, दुन्दुभिध्वनिश्च ।)

यति —महानयं प्रसादो देवस्य ।

परा —भो मस्करिन् ! भगवद्रामानुजपरिग्रहेणैव परां कोटिमारूढोऽसि, तद्गम्यतां नियमनिर्वर्तनाय ।

याद —(शिष्येण सह निष्क्रान्तः)

(ततः प्रविशति भास्करः, शिष्याश्च)

भास्क - (सहर्षम्) मायावादे निरस्ते, ममैन्द्राजकुलम् ; रामानुजस्तु मत्समानधर्मा मयि नात्यन्तमपराध्यति ।

सुनी —(पुरोऽवलोक्य)

यज्ञोपवीती काषायी त्रिदण्डाजिनवान् शिखी ।
सशिक्यासनमृत्पात्रैः शिष्यैरभ्येति मस्करी ॥

राजा- (विमृश्य) देवि ! किमेनं प्रत्यभिजानासि ?

सुम —(विलोक्य) कतिपयदिवसान्तरितदर्शनो मध्यमामात्य एषः । (विहस्य) हळा सुनीते किमेतद्ब्रवीमि । अयमनेन वेषेण खलु मिथ्यादृष्टेर्दौत्य-मनुष्ठितवान् ।

भास्क—जयतु देवः; किम् मामेवमवजानासि ? किञ्चिदस्मिन् जने क्रियतां प्रसादः । द्वे चक्षुषी, द्वे च पदे; एवमेव मन्त्रिणौ च द्वावपेक्षणीयौ; तदहमपि रामानुजस्य द्वितीयो भवामि ॥

सुनी – भास्करमपि तमः प्रविशति ।

प्रमाणेष्विव[1] वेदान्तः प्रमेयेषु परः पुमान् ।
प्रमातृषु यतीन्द्रोऽयं न द्वितीयमपेक्षते ॥

सेना – को दोषः, अनेन जानीमस्ते नीतिपेशलताम्; कथं त्वया विचिन्तितो महाराजविषयः ।

भास्क — ब्रह्मैकं सदुपाधिभेदभिदुरं जीवत्वमभ्येति तत्
जीवत्वे च विपत्तयोऽनुपहितं ब्रह्मैव शान्तं शिवम् ।
ब्रह्मैवयं खलु मुक्तिरेतदखिलोपाधिक्षये देहिनां
कर्मज्ञानसमुच्चयादियमिति त्वय्यन्तराज्यस्थितिः ॥

सुम —(सुनीतिमुखं पश्यन्ती मुखमन्यतः करोति)

सदू —(विमृश्य, सक्रोधम्)

बहुधा जीवरूपेण[2] दुःख्यतीति परः पुमान् ।
जल्पन्ती तव जिह्वेयं शतधा किं न शीर्यते ? ॥

परा —अरे! भगवद्द्रोहवादिनस्ते जिह्वाच्छेदो न दोषाय । (इति पार्श्वमवलोकयति)

(प्रविश्य दिव्यपुरुषः)

दिव्यपुरुषः—कोऽसौ दुरात्मा भगवद्द्रोहमाचरति । (इति कृपाणमाकर्षति)

---

1. प्रमाणेष्वेव—पा॰
2. जीवभेदेन—पा॰

भास्क—( विलोक्य ) हा कष्टम् ! ( इति निष्क्रामति )

दिव्यपुरु—( कृपाणं धून्वन्ननुधावति )

परा —भद्र, निवर्तस्व ; अलमेतावता निर्भर्त्सनेन ।

दिव्यपुरु—तथा । ( इति प्रतिनिवृत्त्य, निष्क्रान्तः )

सुनी —( विहस्य ) देवि ! प्रमाणमनङ्गीकुर्वतां कृपाण एवोत्तरम् ।

सुम —एवमजानती कथं सुनीतिरसि ।

यति —( विलोक्य )

मस्करीव नभःस्थायी बिभ्राणो रक्तमंशुकम् ।
तेजसा हीयमानोऽयं [1]तिरोधत्ते हि भास्करः ॥

राजा—( सुमतिं हस्ते गृहीत्वा )

निधाय सर्वंकषनीतिमार्गे रामानुजे मन्त्रिणि राज्यभारम् ।
सुनीतिमत्या सुमते त्वयाऽहं क्रीडामि कृत्स्नैर्विषयैः प्रहृष्यन् ॥

( इति हर्षं नाटयन्तो निष्क्रान्तास्सर्वे )

इति श्री घटिकाशत - श्रीमद्वरदाचार्यविरचिते वेदान्त-
विलासापरनाम्नि यतिराजविजये
पञ्चमोऽङ्कः



1. तिरोभवति—पा०

# अथ षष्ठोऽङ्कः



(ततः प्रविशति यतिराजः, शिष्यश्च)

यति —(विचिन्त्य) वत्स! सर्वेऽन्ये तिष्ठन्तु।

निरालम्बन[1] मप्येतदेवं साधयतो मतम्।
शङ्करस्य तु लीलेयं गगने चित्रलेखनम्॥

(प्रविश्य शङ्करः)

शङ्क —साधु यतिराज, सम्यग्दृष्टवानसि।

[2]मद्धीपाटवदर्शनाय विदधे तत्त्वस्थितेरन्यथा
मिथ्यामेयममेयमेव सदिति प्रस्थानमन्यन्मया।

(विहस्य)

पश्यंस्तत्त्वमिदं च मुह्यति[3] बत प्राज्ञोऽसि किंत्वद्भुतं
नान्यो वेत्ति नभःस्थले विलिखतः चित्राणि मे कौशलम्॥

यति —सम्यगाह भवान्।

द्रष्टा [4]यदाऽवमन्येत [5]गगने पङ्कजोद्भवम्।
तदा दर्शयितुर्नष्टं कुहनाशिल्पकौशलम्॥

शङ्क —अहं तु पर्यङ्कविद्यामुपासितुमनन्तपुरं गच्छामि।

(इति निष्क्रान्तः)

---

1. निरालम्बनमेवैतत् —पा०
2. बुद्धेः पाटवदर्शनाय —पा०
3. मुह्यति जनः —पा०
4. द्रष्टा यदा चेन्मन्येत —पा०
5. पाषाणे पङ्कजोद्भवम् —पा०

यति —( विहस्य ) लोकस्त्वेतन्न जानाति । केवलं गतानुगतिक एवान्धकूपे निपतति ।

सुतर्क—( विमृश्य )

हा कष्टं किमनेन चेष्टितमभूदात्मद्दहामग्रणीः
किं वा बुद्धसबुद्धिमानपि वृथाचारो विचारोज्झितः ।
सर्वज्ञोऽपि शताध्वरोऽपि कुहनाशास्त्रान्धकूपे नरान्[1]
अन्धानेवमहो ! निपात्य नरकावर्ते न वर्तेत कः ? ॥

यति —कस्त[2]न्न जानाति । सर्वोऽपि स्वधीसामर्थ्यमेव दर्शयति । एवमनात्मज्ञैरन्यैश्च मन्त्रिभिरेकशरीरयोरपि महाराजवेदविचारयोरन्योन्यविरोध उत्पादितः ; तत्प्रशमनाय वेदविचारमानेतुं पञ्चमो वेदः पुराणसहितः प्रहितः ; तन्मया महाराजसमीपे स्थातव्यम् ; तद्भवता यामुनादीन् पुरस्कृत्य माधवोत्सवः कार्यः ॥ ( इति निष्क्रान्तौ )

( इति विष्कम्भः )

( ततः प्रविशति सुनीतिसहितो राजा, परिजनपरिच्छन्ना देवी, यतिराजश्च )

यति —( शुभनिमित्तं वीक्ष्य, दक्षिणतो दर्शयन्, सहर्षम् )

शुकासितभरद्वाजहारीतास्सत्पथे स्थिताः ।
कृष्णपक्षाः कृतालापा[3]द्विजा मे दर्शनप्रियाः ॥

राजा—( विमृश्य, स्मितं कृत्वा ) महर्षिप्रियमेव यतिराजदर्शनम् ।

सुनी —सम्यगुक्तं देवेन ।

वेदेष्वर्थनिधानानि दृश्यन्ते न हि सन्त्यपि ।
तत्र यद्येन दृश्येत तत्तु तस्यैव दर्शनम् ॥

---

1. जनान् —पा०
2. कस्तज्जानाति —पा०
3. कृतोद्योगाः —पा०

यति —( सपरितोषम् ) सर्वमिदं महाराजप्रसाद एव ; शुभनिमित्तपक्षिसंचारवचनमेवेदं [1]परिणमयति। ( सबहुमानं ) राजन्! इद[2]मासनमध्यास्यताम् ।

राजा—( उपविशति )

सुनी —आर्य ! भवताऽपि यथासनमुपविश्यताम् । ( इति चामरहस्ता राजपार्श्वे तिष्ठति )

राजा—( पार्श्वतोऽवलोक्य, स्मितं कृत्वा ) सुनीतिरेव राज्ञां महाराजशब्दं स्थापयति ।

यति —सम्यगुक्तं देवेन ।

काले वर्षति वासवः, कलिकथा न क्वाऽपि, वर्णाश्रमाः
वेलां देव न लङ्घयन्ति, न मिथो वैरं क्वचित्प्राणिषु[3] ।
सूते सर्वफलं मही, सुकृतिनस्सर्वेऽपि संविन्मये
न्यस्यन्त्यात्मभरं मुरद्विषि, महानीतिज्ञराज्ञि त्वयि ॥

राजा —त्वयि मन्त्रिणि किं न सम्पद्यते ललितस्य ।

सुनी — सूनृतमुक्तं देवेन ।

स्वस्वार्थक्षतिरिह न क्वचिच्छ्रुतीनां
प्रत्यक्षप्रभृतिरपि[4] प्रमाणवर्गः ।
स्वार्थेषु प्रभवति निस्सपत्नचारी
राजंस्ते वहति धुरं यतीश्वरेऽस्मिन् ॥

( प्रविश्य कञ्चुकी )

कञ्चु—देव, पञ्चमं वेदं पुरस्कृत्य वेदविचारो द्वारि तिष्ठति ।

राजा—( अश्रवणं नाटयति )

1. वचनं यदेवम् –पा०
2. सिंहासनम् –पा०
3. प्राणिनाम् –पा०
4. इह –पा०

यति —देव ! प्रसादः क्रियताम् ।

राजा —मायावादवाक्याद्विदितमस्य दौरात्म्यम् ।

यति —देव ! विश्वमृषावादिवचने किं सत्यमपि किञ्चिदन्वेषयसि ; स्ववचनमपि मृषेति हि स प्रलपति । इतिहासपुराणवशवर्ती देवस्य स भृत्य एव ।

राजा —( सुनीतिमुखं पश्यति )

सुनी —देव ! मूलमन्त्रिवचनं प्रमाणयितव्यमेव ।

यति —पञ्चमो वेदः प्रमाणयितव्यः ।

राजा —यथा रोचते अमात्याय ।

( कञ्चुकी निष्क्रान्तः )

( ततः प्रविशति भारतं पुराणं च पुरस्कृत्य वेदविचारः )

वेदविचारः—( सभयम् ) भारत ! दुष्टमन्त्रिवचनजनितविरोधं महाराजं कथं पश्यामि ?

इतिहास —तत्तिष्ठतु, विधिप्रियोऽपि [1]किमसत्सुहृदं [2]परमार्थवादमप्रमाणीकुर्वन् राजानं प्रकोपयसि ?

मन्त्रब्राह्मणदेवतापरतया मान्यो विधेरप्ययं
तस्मिंस्तद्गुणवर्णनैः प्रवणयत्यत्यद्भुतैर्यो जनान् ।
दूरस्थेऽपि विधावनन्यसुलभैरर्थैरलं प्रीणयन्
राजानं विधिनिर्विशेषमधुना सम्माननीयस्त्वया ॥

---

1. 'किमसत्सुहृद' मित्यारभ्य, 'तत एव लभन्ते' इत्येतत्पर्यन्तस्य स्थाने, अयं पाठः क्वचिदुपलभ्यते —

किम्महामन्त्रिणमर्थवादमर्थरहितं कृत्वा प्रकोपयसि ?

अर्थप्रधानं राजानमपूर्वार्थेन तोषयन् ।
मन्त्री मानयितव्योऽयं विधिर्देवतापरः ॥

अग्नीन्द्रादिदेवतामुखेन प्रीतस्सर्वशेषी सर्वान्तरात्मा देवतामुखेन यज्ञादिफलं ददाति । तद्भावयं प्रमाणीकृत्य — इति ।

2. देवतावैभवपरमार्थवादम् —पा०

तथा सति,

ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥

फलं च तत एव लभन्त—इति, मद्वचने तिष्ठतस्ते न किञ्चित्कश्चिद्भयमस्ति ।

वेदवि—बाढम्, सम्यगुपदिष्टोऽस्मि; न केवलं मन्त्रार्थवादैर्ध्यानादिविधिविषयतया विधेरन्यथाऽनुपपत्त्या च तद्विधाता ईश्वरः सविभूतिकस्सिद्ध एव; अपि तु, [1]कर्माराध्यविष्णुवैभवज्ञानशून्यानां कर्माणि श्रद्धाजननाय तद्वैभवमुच्यते ।

इतिहा—यथाधिकारं प्राणिरक्षणं भगवदभिमतमेव ।

[2][वेदवि—मदभीप्सितमेवैतत् ।

इतिहा]—(पुरोऽवलोक्य, सानन्दम्)

अग्रन्यस्तकलाचिकामधिवसन्नध्यात्मपीठस्थली-
माधूतामलचामरः श्रुतिवधूहस्तैः क्वणत्कङ्कणैः ।
अन्वास्योऽयमनादिकर्मविवशै[3]राब्रह्मकीटं जनैः
आस्ते सस्मितमाशु मोक्षपदवीः शृण्वन् शुकोक्ताः कथाः ॥

किञ्च,

कलाचीं भृंगारं कनकमुकुरं चामरलतां
पताकां यच्चान्यत्सकलमिदमादाय चतुराः ।
[4]झलङ्कुर्वत्सर्वाभरणरमणीयाङ्गलतिका
भजन्त्येता देवं परदहरविद्याप्रभृतयः ॥

पुराणम्—(सहर्षम्) सुनीतिप्रेरितोऽस्मान् देवः पश्यति । तत्, प्रणामः क्रियताम् ।

---

1. कर्मान्तराराध्य—पा०
2. कुण्डलितो भागः अधिकः पाठः ।
3. आब्रह्मरुद्रं जनैः—पा०
4. अलङ्कुर्वत्—पा०

वे:वि –(तथा करोति[1])

मुनी —देव ! सहस्राधिकरणदृष्टपराक्रमोऽयमर्जुन इव रामानुजमते तिष्ठन् प्रतिज्ञातवैदिककुलपालनप्रत्यूहकृतान्तविजयो महाभारतरणसमर्थो भवति देवस्य ।

राजा—(सादरं पश्यति)

यति —देव ! भवदेकार्थो धर्मप्रियोऽयं त्रैवर्गिकरक्षाधिकारे नियोक्तव्यः; त्रैवर्गिका अपि कालेन धर्मद्वारा देवपादानाश्रयन्ति । भ्राता चायं देवस्य युवराजपदे निवेश्य, बौद्धादिविजयाय पूर्वप्रस्थितेन तन्त्रपालेन सह प्रस्थापनीयः ।

राजा—तथा क्रियताम् ।

वेदवि –यदाज्ञापयति देवः । (इति निष्क्रान्तः)

यति —(पुराणमितिहासं च पश्यन् सबहुमानम्)

[2]त्रिविधचिदचित्तदीश्वर—तल्लीलाभोगमोक्षतदुपायाः ।
उपबृंहिता युवाभ्या[3]मुपभुज्यन्ते हि सद्भिरस्यार्थाः ॥

पुरा —(इतिहासमुखं पश्यति)

यति —(स्मितं कृत्वा) कथ्यतामितिहास ! भवन्मुखेनैव खलु पुराणवचांसि निस्सरन्ति ।

इतिहा –यतिराज ! महाराजसौभाग्यं कथङ्कारं वर्णयामि ?

क्षेत्रज्ञेषु न कोऽपि वेत्ति पिहितं धूमादिमार्गं तृणैः
यास्यं, किं पुनरर्चिरादिम्; अमुना वैकुण्ठवर्तन्यपि ।
पान्थप्रीतिपरातिवाहिककृतप्रासाददीपावली-
शय्योल्लोचमुखोपचारसुभगा जाता पुरीसन्निभा ॥

---

1. प्रणमति –पा॰
2. विविध –पा॰
3. भवद्भ्याम् –पा॰

यति —( सहर्षम् ) एतत्सर्वं युष्मदनुशासनफलमेव ; भवद्भ्यामपि स्वाधिकारे जाग्रद्भ्यां भवितव्यम् ।

इतिहासपुराणे—तथा । ( इति निष्क्रान्ते )

( ततः प्रविशति धर्मशास्त्रम् )

धर्म —( राजानं प्रणमति )

यति —देव, धर्माधिकारिणि क्रियतां प्रसादः ।

राजा —( कटाक्षेण पश्यति )

यति —भद्र, राजाज्ञां पुरस्कृत्य भवता धर्माधिकारः कर्तव्यः ।

धर्म —महानयं प्रसादः । ( इति निष्क्रान्तम् )

( प्रविश्य शब्दो राजानं प्रणमति )

यति —[1]स्फोटव्याधिविनिर्मुक्तोऽयं, देवस्य प्रकृतिप्रत्ययबलेन सर्वत्र सगुणप्रियत्वं प्रकाशयन्, देवस्य पादसेवां कर्तुमर्हति ।

शब्द —कृतार्थोऽस्मि । ( इति निष्क्रान्तः )

यति ( विमृश्य ) प्रत्यक्षमनुवर्तमानश्चार्वाकोऽनुमानेन जेतव्यः । अनुमानमनुवर्तमानो बौद्धः प्रत्यक्षेण जेतव्यः ।

सुनी —सम्यगुक्तम् ।

राजा —( किमपि चिन्तयन् सोत्कण्ठं तिष्ठति )

सुमतिः—हा ! धिक्, मायाविलासिनीं पुनरपि चिन्तयन्निव प्रतिभाति !

यति —( ससंभ्रमम् ) ( स्वगतम् ) हन्त ! किं मयि नीतिविप्लवो दृष्टस्स्यात् ।

राजा —( किञ्चिद्विहस्य )

सुमतिविरहितो न वेद्मि किञ्चित्
[2]सुखमसुखं प्रभवामि नात्मनोऽपि ।

---

1. स्फोकव्याधि —पा०

2. सुखमपि च —पा०

मम हृशमथवा ममात्मसत्ताम्
किमपि न जीवितुमुत्सहाम्यपश्यन् ॥

यति —(सहर्षम्) सम्प्रति समाश्वस्तोऽस्मि ।

सुम —(स्मितं करोति)

सुनी —(सस्मितम्) देव, किमत्र[1] पारितोषिकम्, इहैव देवीं दर्शयामि ।

राजा —किमन्यत्; त्वत्सखीमेतां सर्वविषयस्वामिनीं कृत्वा, तच्छेषो भवामि ।

सुनी —(सस्मितं इहैव दर्शयति)

राजा —(पार्श्वमवलोक्य, सानन्दम) किं चामरग्राहिणीषु अन्यतमा मज्जीवितकला तिष्ठति !

यति —तदुन्नीयते खलु सख्याश्चामरग्रहणेन ।

राजा —(हस्ते[2] गृहीत्वा, सुमतिमासनमध्ये निवेशयन् वदनमुन्नमय्य) कथय कलालापिनि !

गच्छन्त्या सह मां विहाय सकलं किं देवि ! नीतं त्वया
किं वा नष्टमिदं न वेद्मि भुवने किञ्चिन्न दृष्टं मया ।
दृश्यन्ते विषया यथापुरममी त्वय्यागतायां जगत्
संजातं नु सहागतं नु यदि वा किं चक्षुरासीन्मम? ॥

यति —देवि, किमत्र विचारेण? सुमतिरेव हि तत्त्वदर्शिनस्ते चक्षुः !

सुनी —विस्फारितमपि कियत्पश्यति प्राकृतं चक्षुः ?

यत पञ्चोपनिषन्मयं पदमिह प्रत्यञ्चि यानि स्वयं
ज्योतींषि त्रिविधानि यानि च तमोभाञ्जि प्रतीपानि च ।

1. किमस्ति —पा०
2. हस्तेन —पा०

यत्सर्गप्रति[1]सञ्चरादि सकलं तत्त्वेन गृह्णाति यत्
तच्चक्षुर्मतिरेव काचगुलिकाभेदः परं प्राकृतम् ॥

राजा —सुनीतिं विना कः पुनरेवं विवेचयति । (सुमतिं पश्यन्) चारुहासिनि, सत्यमेव ते कथयामि ।

सर्वज्ञोऽहमपि त्वयैव विषयै राजा त्वदीयैरहं
प्रख्यातोऽस्मि भवत्प्रसादकलया मानाधिकोऽसाविति ।
विद्यारूपिणि विश्वविस्मयनिधे! मुक्तेश्च दातास्म्यहं
मन्ये मानिनि, किं ब्रवीमि सुमते! मज्जीवितं च त्वयि ॥

सुनी —(स्मृतिमभिनीय) देवि, भर्तृवल्लभे, सम्प्रति हि सत्यवचनासि ।

सुम --(स्मितं कृत्वा) देव, राजमहिषी राज्ञी किं न भवति ?

कालस्तद्विवशानि सप्तभुवनान्येषु स्थिताः प्राणिनः
तत्कर्माणि च तत्फलं गुणमयी माया जगद्रूपिणी ।
[2]मायासीम्न्यजडं पदं तदिह च ज्योतिःपरं श्यामलं
ह्येतद्भोगसपीतयश्च कवयः सर्वं ममासीत्त्वया ॥

राजा प्रेयसि! ममापि सर्वमिदं त्वमेव । (इति तां कपोलयोरुपाघ्रातुमिच्छति)

देवी —(यतिराजं विलोक्य, सस्मितम्, वदनमपनयन्ती) कान्त! विरक्तसन्निधौ किं मामेवं व्रीलयसि ?

राजा —(सखेदम्)

अस्मत्केलिरहस्य[3]बन्धुरमलामानन्दसंविन्मयीम्
मुक्तैकावलिशोभिनीमनुभवन्मुक्तिं रहस्त्वत्सखीम् ।

---

1. प्रतिसर्गकादिसकलम् —पा०
2. मायासीम्न्यजसम्पदन्तरहित ज्योतिः —पा०
3. केलिरसस्य बन्धुः —पा०

राागी [1] वेत्ति च रागवृत्तिमुभयो रामानुजोऽप्यावयोः
निर्दाक्षिण्यमिदं मुखं मम करात्नेतुं न युक्तं त्वया ॥

सुनी —देव! सहजलज्जाशालिन्यः खलु विलासिन्यः? (विमृश्य) भगवन्, यतिराज! भुक्तिमुक्तिसौभाग्यनिकषोपलो भवानेव तयोर्वैषम्यं विवृणोतु ।

यति —(विहस्य) आनन्दवल्ल्यैव तुलया विधृतमेतत, तथाहि —

परब्रह्मास्वादप्रसृमरमहानन्दलहरी
विहारी मुक्तोऽयं विमलरस[2]संविन्मयवपुः ।
पदं तन्माहेन्द्रं पशुपतिविभूतिं च महतीं
प्रभुत्वं वैधात्रं प्रसृतिपरिमेयं कलयति ॥

राजा —अस्मदमात्यवचनं सुनीतिहृदयं किमनुरञ्जयति?

सुनी देव, कथमन्यथाऽहं सुनीतिः स्याम्?

यति —तत्त्वतो निरूपणे प्रसृतिरपि दुःखमेव ।

पीड्यमाना हि रक्ष्यन्ते ब्रह्मरुद्रेन्द्रसम्पदः ।
हरिणा भक्तवश्येन हन्त! किं कुर्महे परैः? ॥

किञ्च,

मूतैस्तन्मयदेहमेव पुरुषः [3]पुष्यन्नहं भोगवान्
इत्युन्मज्जति दुःखसिन्धुकुहरे मज्जत्यपि स्वात्मनि ।
(विचिन्तयन्, विहस्य)
शुद्धज्ञानसुखात्मकोऽप्यनुभवंस्तुष्यत्ययं मूढधीः
मांसासृङ्मलमूत्रपूयभरितां भस्त्रीं वरस्त्रीति च ॥

---

1. वाञ्छति रागवृत्तिम्—पा०
2. विमलसुखसंविन्मय—पा०
3. पुष्णन्—पा०

राजा —अयमपि कश्चित् ।

सुम —(विहस्य) भगवन्, किमेवं स्त्रीशरीरं निन्दसि?

सुनी —भगवल्लीला जन्तून् किं किं न कारयति?

राजा —अपरस्तु,

ध्यायन् सत्यमनन्तमन्तरजडं ब्रह्मारविन्देक्षणं
निष्क्रम्यास्य[1] सुषुम्नयैव कृपया निर्धूतमायातुषः[2] ।
विष्णोस्तत्पदमेत्य तत्र परमे व्योम्नि स्वयंचित् स्वराड्
भुङ्क्ते तेन विपश्चिता सह महानन्दाननन्तान् बुधः ॥

सुनी —एवं सति, लीला, दया वा वासुदेवस्य का वल्लभा भवति?

राजा —(सस्मितम्) तदिदं यतिराज एव विवृणोतु ।

यति —देव एव वासुदेवहृदयं जानाति, न सुमतिः ।

राजा —(सुमतिमवलोकयति)

सुम —देवस्य हृदयं च मूलमन्त्री यतिराज एव जानाति ।

यति —(विहस्य) तर्हि, सुनीतिरेवावधारयतु ।

प्रगल्भेयं लीलापरवश[3]यतीशं बहुविधैः
प्रकृत्याकृष्टात्मप्रणयपरिहासैस्तदपि सः ।
परं तद्दाक्षिण्यात्सुकृतमिति किञ्चिद्व्यपदिशन्
दयावश्यो देवः त्रिगुणनिगलं[4] न त्रुटयति ॥

1. निष्क्रम्याशु —पा०
2. मायामलः —पा०
3. यतिस्वामिनममुम्, दिलासैरुद्वेलैर्विविधनिजभूत्यै स्तदपि सः । —पा०
4. निगळान्मुञ्चति नरान् —पा०

सुम --(स्मितं कृत्वा) षोडशसहस्रावरोधसीमन्तिनीजनरञ्जनचतुरोऽयं धूर्तचूडामणिः किमत्र परिमुह्यति ?

सुनी --(सानन्दम्) क्रीडन्नेव हि केशवः सर्वात्मनो रक्षति ?

राजा — यः प्रत्यञ्चि सृजन् पराञ्चि च महाभूतानि रक्षन् हरन्
क्रीडत्यद्भुतदिव्यमङ्गलगुणः श्रीमाननादिः पुमान् ।
सर्वं कर्तुमकर्तुमप्यपरथा कर्तुं समर्थोऽपि सन्
व्याजं किञ्चिदपेक्ष्य रक्षति जगद्विश्वव्यवस्थापकः ॥

(विचिन्त्य,)

कर्मव्याजकृताखिलात्मनिवहक्लेशावबोधस्फुरद्-
पश्चात्तापकृपाविमोचितजगज्जन्मादिलीलादरम् ।
भोगैकप्रवणं विधास्यति परं ब्रह्माऽपि दत्ताभयो
भूतेभ्यो यतिराज एष इति मे चेतस्यभून्निश्चयः ॥

किञ्च,

सत्याशेषजडाजडात्मकजगद्देही "बहुस्या" मिति
स्वेच्छातो बहुधा भवन्नपि न तद्दोषेण लिप्येत सः ।
तत्तच्छब्दधियामयं तदपृथक्सिद्धचैव विश्रान्तिभूः
देहात्मादिनयेन येन सुपथा भेदैक्यवाचोगताः ॥

यति —(सपरितोषम्) [1]सर्वेश्वरसङ्कल्पमयस्य ते किमन्यत्कथयामि ?।

देहाक्षादिविलक्षणोऽणुरजडो नित्योऽहमर्थोऽमल
ज्ञानानन्दमयोऽप्यतन्मय इव भ्राम्यत्यविद्याऽऽवृतः ।
पञ्चक्लेशविपाकपावकशिखालीढस्य तस्यात्मनो
निर्वाणाय निसर्गसौहृदनिधे ! नान्या गतिस्त्वां विना ॥

---

1. सकलसङ्कल्पमयस्य —पा०

राजा —( विमृश्य स्मितं कृत्वा ) संसारसागरपतितसर्वात्मसमुज्जीवनचतुरस्य भवतो नान्यत्सदृशं पश्यामि । ( इति स्वयमपि तदेव पद्यं पठति । )

सुम } —( विहस्य, अन्योन्यं पाणिना पाणिमास्फालयन्तौ )
सुनी }

राजामात्ययोः परस्परातिशायी प्रणयबहुमानपेशलः सल्लापः ।

राजा —( सुमतिसुनीती पश्यन् ) सत्यमेव युवयोरहमुपदिशामि ।

सर्वज्ञो[1] न न वेद तस्य करुणाराशेरुपेक्षा कुतः
सर्वेशः किमसौ न शक्ष्यति परित्रातुं तथापि प्रभुः ।
सर्वान् रक्षति यत्कटाक्षकणिकापेक्षी नरानुद्धरन्
संसाराम्बुनिधेः स एव हि गुरुः सर्वोत्तरं दैवतम् ॥

यति— देव ! भवत्पादसेवा कस्य वा गौरवं नापादयति ?

उभे —( सप्रश्रयम् ) देव ! भवन्तमन्तरेण को वा तत्त्वमुपदिशति ?

यति —( स्पर्शमभिनीय )

वाताः केऽपि वहन्ति सन्ततवहत्कुल्योपकुल्योज्ज्वलद्-
ग्रामारामकवेरजातटयुगक्रीडानिरूढादराः ।
श्रीरङ्गाधिपरङ्गसङ्गतमहत्सामन्तसीमान्तनी-
कर्णाकल्पितकल्पवृक्षलतिकाधूलीमधूलीमुचः ॥

( नेपथ्ये )

जय जय महाराज ! विजयस्व ।

चा[2]र्वाकश्शैवशाक्यक्षपणककणभुक्सांख्ययोगाक्षपादाः
भग्नास्त्वत्तन्त्रपालैः प्रतिदिशमगमन्नासिकाच्छेदखिन्नाः ।
लूनश्रुत्यन्वयं तन्मुखमशुभमिति त्यक्ततद्दर्शनेन
प्रीत्यालोकेन दृष्टा वयमपि विलसच्छास्त्रशस्त्रा निवृत्ताः ॥

( सर्वे श्रुत्वा हर्षं नाटयन्ति )

---

1. सर्वज्ञाननिधेश्च तस्य —पा०

2. चत्वार —पा०

(पुनर्नेपथ्ये)

षडङ्गोपेतत्वत्कटकपटुनिस्साणनिनदे
वितण्डाकण्डूलप्रतिकथकजिह्वाकलकलः ।
अमन्दोऽप्यासीत्तन्मकुटतटकुट्टाकचरण-
क्वणत्त्वत्सेनानीमणिकटककेलीचुलकितः ॥

(प्रविश्य)

सेनापतिः—देव! दिग्विजयोत्सवः क्रियताम् ।

क्रोधोद्धूतकुरूद्वह[1]द्वयगदास्फोटैककोटीभवत्-
तर्कातर्किभयद्रुतद्रवदहङ्कुर्वाणदुर्वादुकः ।
प्राप्तोऽयं तव तन्त्रपालनिवहः क्षीरोदनीरोदर-
भ्राम्यन्मन्दरकन्दरध्वनिधुराधिक्कारढक्कारवः ॥

राजा—(सपरितोषम्) विजयप्रकारमावेदय ।

सेना—देव! कृते सति कर्तव्ये, किं करणनिरूपणेन ?

सुनीतिः—(पुरोऽवलोक्य) सर्वमेतदुन्नीय सर्वज्ञे[2]नामात्येन प्रागेव प्रवर्तितोऽय-
मुत्सवः । पश्य! पश्य!

श्रीमद्रत्नपरिष्कृतैः पुरमिदं सेन्द्रायुधं तोरणैः
सौधारूढसुरद्रुमा इव कृतालङ्कारचारुध्वजाः ।
दृश्यन्ते भुवि देवता इव जना दीप्तश्रियो भूषणैः
देवो रङ्गपतिश्च पौरसदृशं दिव्योत्सवैः क्रीडति ॥

राजा—(सानन्दम्)

द्विजेभ्यो दीयन्तां कनकखुरशृङ्गास्सुरभयः
प्रवर्त्यन्तां यागाः परमपुरुषार्थप्रणयिनः ।

1. स्फुटगदा—पा०
2. सर्वचेतिनाऽमात्येन—पा०

प्रपत्तिर्भक्तिर्वा भगवति विधीयेत मनुजैः
प्रमुच्यन्तां सर्वे प्रबलभवकारागृहगताः ॥

सदूहः--सम्यगौदार्यसम्पदनुगुणमादिष्टं देवेन । (ऊर्ध्वं विलोक्य)

गुणपञ्जरनिर्मुक्तश्शुक एव न केवलम् ।
गृणन् कृष्णेति सर्वोऽपि जन्तुर्विष्णुपदं गतः ॥

(श्रवणमभिनीय)

परब्रह्मास्थानीस्फटिकमयसोपानपदवी-
समारोहक्रीडाचटुलमणिमञ्जीरचरणाः ।
स्तुवन्ति त्वामेते जय जय महाराज भवतः
प्रसादादारूढाः परमपदमित्यञ्जलिधराः ॥

(नेपथ्ये दुन्दुभिध्वनिः; सर्वे सहर्षं शृण्वन्ति)

यति —किमेतत् ।

(ततः प्रविश्य सुदर्शनः पुरोऽवलोक्य सानन्दम्)

अयमिदानीम्,

त्रिवर्गमवधीरयं स्त्रिविधचेतनाचेतन-
प्रपञ्चमयकञ्चुके भगवति स्वयं ज्योतिषि ।
निवेशितधियां सतां निखिलमङ्गलैकास्पदं
तमेव कथयन् गतिं यतिभिरीडितः क्रीडति ॥

(उपसृत्य) देव, समयविजयसन्तुष्टैः श्रीमत्पराङ्कुशपरकालनाथयामुन-श्रीवत्साङ्कदाशरथिप्रभृतिभिः परिवर्तितविजयवसन्तोत्सवो गोपीजनवल्लभस्समागच्छति ।

राजा —(सानन्दम्, सुदर्शनं हस्ते कृत्वा, सस्मितं रामानुजं पश्यन्) प्रथमपटहः खल्वसै प्रियरंगः सकलविजयमङ्गलप्रसङ्गस्य । य एषः,

कृतललितसुवेषः केलिवैनालिकोऽयं
मधुमथविषकल्पैः मन्दहासैर्वचोभिः ।
[1]कुहकसचिवमायागर्वसर्वस्वहारी
रमयति हृदयं मे त्वद्यशः प्रावप्ररोहः ॥

तदस्मै वत्सकुलप्रदीपाय दीयतां कश्चिदधिकारः ।

यति —दत्त एवास्मै त्वदर्थविचारक्षमाय देवस्य कोशाधिकारः ।

सुमतिः–(स्मितं कृत्वा) [2]सदृशं खलु [3]वत्सकुलवात्सल्यं रामानुजस्य ।

राजा —(पुरोऽवलोक्य, सप्रणयबहुमानमञ्जलिं बद्ध्वा)

सन्ध्यां कुङ्कुमरेणुभिर्विरचयं श्चन्द्रोदयं दर्शयन्[4]
कर्पूरैः करहेमशृङ्गसलिलैः कस्तूरिकामेदुरैः ।
गोपस्त्रीमुखचन्द्रबिम्बममलं कुर्वन् कलङ्कोज्ज्वलं
गोविन्दस्य कुतूहलं दिशतु मे कोऽप्येष केलिक्रमः ॥

सुमतिः–(सप्रणयकौतुकं पश्यन्ती) सखि सुनीते, किं न पश्यसि ?

तटिद्भासो वासःप्रतिफलितसर्वांगसुभगा
वलद्द्रोण्यो वल्गत्कुचभरनमन्मध्यलतिकाः ।
प्रसिञ्चन्त्यन्योयं परिहृतपरप्रेरितजलाः
करैरुद्यच्छृङ्गैः कलरणितभूषा युवतयः ॥

सुनीतिः–(सकौतुकम्) देवि, किमन्यतो विलोकयसि ?

कस्तूरीतिलकभृतः कपोलरिङ्गत्ताटङ्का स्तरलदृशो निरुद्धमार्गाः ।
गोविन्दे कृतजलकुङ्कुमप्रहाराः मोदन्ते मुखरितहेमशृङ्गतोयाः ॥

---

1. कृतकसचिव –पा०
2. सहजः खलु वत्सकुले प्रेमानुरागो रामानुजस्य –पा०
3. वत्सकुललालनम् –पा०
4. द्योतयन् –पा०

( सानन्दम् ) सकलगोपसुन्दरीविहारभुजङ्ग भुजङ्गराजपर्यङ्कशायिनि रङ्गराजे [1]दीयतां दृष्टिः । यदिदानीम् ।

पाणिभ्यां प्रतिरुन्धतीं दृतिजलैरेकां पुरोवर्तिनीं
पश्चात्कण्ठनिमग्नबाहुवलयामन्यां पुनः प्रेयसीम् ।
आवृत्याननमीक्षणामृतरसैराविस्मितैरार्द्रयन्
मृष्टामृष्टविशेषको [2]विहरते मृग्यस्त्रयीभिर्युवा ॥

राजा --(साञ्जलिबन्धम् )

जानीमस्तव सत्यमर्जुनकृते भीष्मप्रहारोद्यमात्
गोपस्त्रैणविहारधूर्त ! विदितं त्वद्ब्रह्मचर्यं जनैः ।
दौत्येन स्फुटमीश्वरत्वमपि ते स्वामिंस्तथाप्युत्तरा-
गर्भोज्जीवनभेषजाय भवतः पादाय तस्मै नमः ॥

किञ्च,

अकोकिलामाशु विधातुमुर्वीम् अपाकशालानमरांश्च [3]नाथ ! ।
शक्ताऽपि शान्ता नमसैव याते तस्यै नमस्सप्तमभूमिकायै ॥

अपिच,

परस्मादन्यस्मै यदपि यदपि स्वेन परतः
परस्मै स्वस्मै तु स्वत इतरतो वा स्फुरति यत् ।
तदेतत्सर्वात्मं स्तव भवति षाड्गुण्यजलधेः
विधेयं चाधेयं विविधविनियोगोचितमपि ॥

किञ्च,

तमो यत्प्रागासीत्त्रिगुणमयमस्माच्च यदभूत्
ततो यत्त्रेधाऽऽसीद्बहुविधमतो यत्समजनि ।

---

1. निधीयताम् —पा०
. विजयते —पा०
3. कर्तुम् —पा०

ततः पञ्चभ्यो यत्पवनगगनाद्यात्मकमभूत्
तदेतत्सर्वं ते भवति खलु लीलापरिकरः ॥

यति —देव, भवन्तमन्तरेण वस्तुतत्त्वं भगवतो लीलाविलसितं च को वा जानाति ?

तन्त्र — विसुश्चेन्नैव स्यादणुपरिमितोऽणुर्यदि भवान्
कथं सर्वत्र स्याद्द्विविध इति चेन्नोचितमिदम् ।
स्वयं न स्याद्रूपद्वयमपि न चेत्त्वां मधुरिपो !
कथम्भूताकारं कथय निरणैषीदुपनिषत् ?

सुनीतिः-(विहस्य) सेनापतिरत्रापि सदूहतां दर्शयति ।

यति —(सुनीतिं पश्यन्) भद्रे किमन्यद्ब्रवीमि,

पारे चिरन्तनवचस्तमसः परस्तात्
मध्ये गुहं मनसि संयमिनां च मृग्यम् ।
[1]तत्त्वं परं धृतसकुङ्कुमवारिशृङ्गं
गोपीकटाक्षदृढशृङ्खलितं विभाति ॥

राजा —भक्तिविशेषः किं किं न कारयति ?

सुनीतिः-(सोल्लुण्ठम्)

कुसुमायुधकोटिकान्तिभाजा कुहनागोपकुमारविग्रहेण ।
मदनोपनिषद्रहस्यविद्यां व्यवृणोदेष विमुक्तये वधूनाम् ॥

राजा – सत्यम् । किन्तु,

अतिभूमिं गतस्त्रीणामनुरागो हरौ तु यः ।
स एव भक्तिरूपेण पच्यते मोक्षकारणम् ॥

---

1. तेजः परम –पा०

सुनीतिः-(सुमतिं प्रति सपरितोषम्)

साम्राज्यसम्पदसि सर्वसुखानुभूतिः
भक्तिः प्रपत्तिरपि ते परिणामभेदः ।
मुक्तिः परानुभवभूमि[1] रसि त्वमेवं
पुष्णासि देवि ! भुवनानि विलासभेदैः ॥

राजा —(सस्नेहबहुमानम्)

कुदर्शनानीतरदर्शनानि यतिन्द्र ! कुर्वन्निजदर्शनेन ।
सम्यक् श्रुतिन्यायकलापदर्शी[2] सुदर्शनोऽसि प्रियदर्शनस्त्वम् ॥

(प्रविश्य दिव्यपुरुषः)

दिव्यपुरुषः—देव, प्रसन्नस्ते भगवान् वासुदेवः । किं ते भूयः प्रियमुपहरतु ?

राजा —(सपरितोषबहुमानम्)

मायावी सचिवो निरासि महितो मानार्थसत्त्वै[3]रहं
सम्राडस्मि समृद्धसम्पदयथावादो न वेदे क्वचित् ।
भग्नानि प्रतिदर्शनानि च ततः प्रासे च रामानुजे
मन्त्रित्वं मम नास्ति किञ्चिदधुना सम्प्रार्थनीयं मया ॥

तथापि, इदमस्तु भरतवचनम् ।

काले वर्षतु वासवः क्षितिभुजो रक्षन्तु सम्यङ्महीं
सर्वे सन्तु निरामयाश्च कृतिनः सत्त्वोत्तराः प्राणिनः ।
पुण्यालोकमिमं पुनातु भगवद्भक्तिश्चिरस्थायिनी
मालावद्यतिशेखरस्य विहरत्वाज्ञा नृणाम् मूर्धसु ॥

(इति हर्षं नाटयन्तो निष्क्रान्तास्सर्वे)

---

1. परानुभवहेतु. —पा॰
2. श्रुतिन्यायसुदर्शनेन —पा॰
3. मानार्थतत्त्वैः —पा॰

भरतः — नीतो मयाऽद्य निगमान्तमदद्विपोऽयं
रंगस्थलं रचितनाटकसंविधानम् ।
नित्यं निरंकुशगतिर्निजसूत्रमार्गे
किञ्चिद्यदि स्खलति सह्यमिदं सदस्यैः ॥

इति श्रीवत्सकुलतिलकश्रीघटिकाशतसुदर्शनाचार्यतनूभवस्य
श्रीमदम्माळाचार्यापरनामधेयस्य श्रीमद्वरदाचार्यस्य
कृतिषु वेदान्तविलासापरनामधेये
"यतिराजविजये" नाटके
षष्ठोऽङ्कः

समाप्तमिदं च नाटकम् ।

—०००—

नमो वरदविष्णवार्यनयनानन्ददायिने ।
वात्स्याय वरदार्याय वादिनीहारभास्वते ॥

श्रीमते वरदार्यमहागुरवे नमः



तिरुमल तिरुपति देवस्थान मुद्रणालय, तिरुपति. १७-९-१९५५.

श्रीरस्तु

श्रियः कान्ताय नमः

श्रीमत्यै गोदादेव्यै नमः

श्रीमते रामानुजाय नमः

# यतिराजविजयव्याख्या रत्नदीपिका ।



श्रीवेदान्तविलासस्य नाटकस्य यथामति ।
प्रणम्य वरदं व्याख्या क्रियते रत्नदीपिका ॥

अन्तर्वेदान्तसाम्राज्यं बहिस्साहित्यसौरभम् ।
विदग्धः खलु वेदान्तविलासं भोक्तुमर्हति ॥

अत्र राज्या सह सुप्तस्सन् कृष्णः, श्रीभूमिनीलादेवीरुत्स्वप्नायितवान् । इदमुच्यते — "पद्मेति" । अत्र "पद्मे" "नीले" "महि" – इति च संबुद्धयः । राधापक्षे, पद्मे इति नयने रूप्येति, नीले इति कुन्तलविशेषणम् । महितैः - पूजितैः । अनेन भाष्यान्तरात् सूत्रविषयवाक्यानां योजनाभेदः सूच्यते ।

कयाचित् स्वदुहितुर्मोहकारणं पृष्टा काचिदीक्षणिका दैवज्ञा तं मोहकारणं व्यञ्जनावृत्त्या धूर्तकृष्ण एवेत्याह — कूर इति । तदभिप्रायमविज्ञाय कृष्णवर्जं सर्वे कृष्णसर्प एव तन्मोहकारणम्, स तु नरेन्द्रैः — विषवैद्यैः । न साध्यः । स एव पूज्यतां मोहशान्तय इति मेनिरे । कृष्णस्तु ईक्षणिकावाक्यं स्वविषयमिति मत्वा स्मितमकरोत् । अत्र नरेन्द्रः - कंसादिः मोह स्वेद - पुलकादिरुभयत्र समानः । एतदनुगुणं सर्वं योजनीयम् ।

अत्रापि शम्भुशिवादिकारणशब्दानां नारायणपरत्वं सूच्यते । दृशा श्रृणोतीति । चक्षुश्श्रवाः – शेषो लक्ष्यते । छन्दांसीति । "सुपर्णोऽसि गरुत्मान्" निति वेदोक्तश्छन्दोमयो गरुडो लक्ष्यते । लीला - लीलोपकरणम् । कालकण्ठा-मलमिति । चन्द्रादित्यौ । नित्यनिरतिशयस्वानन्दानुभवजागरूकस्य भगवतो बाह्य-विराममात्रमेव निद्रेत्युच्यते । नित्यजागरूकस्य [ भगवतो बाह्यविराममात्रमेव निद्रे-त्युच्यते । नित्यजागरूकस्य ] भगवतो न हि निद्रा सम्भवति । निगमस्तोमान्तं-

सोत्पलमिति । अनेन निखिलवेदान्तवेद्यत्वं, सुरभि - सुकुमार - श्यामळ - दिव्य-मङ्गलविग्रहयोगश्च सूच्येते ।

अत्र चतुर्विंशतिपदैः — चतुर्विंशतिप्राकृततत्त्वानि, षड्भिर्वाक्यैः बद्धमुक्तनित्याः परमव्योम - काल - सर्वेश्वराश्च वेदान्तवेद्याः सूच्यन्ते । अत्र समवाक्यत्वेन 'नान्दी-

---

1. नान्दी नाम — "नन्दन्ति देवता यस्मात्, तस्मान्नान्दीति कीर्त्यते" इति निर्वचनेन देवतानामानन्दसन्धायिनी मङ्गलगीतिः — नान्दीति व्यवह्रियते ।

नन्दी वृषः कोऽपि महेश्वरस्य, रङ्गत्वमादौ किल खे जगाम ।
तद्रङ्गमुद्दिश्य कृतां तु नान्दीं नान्दीति तां रङ्गविदो वदन्ति ॥ इति ।

नन्दीवृषो वृषाङ्कस्य रङ्गोऽभून्नृत्यतः पुरा ।
अतस्तदाह्वयया नान्दी रङ्गपूजा प्रकीर्तिता" ॥

इति च वचनात् लाजाञ्जलिप्रकिरणादिना क्रियमाणा सपर्येति, केचित् । अथवा, "सकललोकसन्तोष-करनृत्तदिदृक्षवः सुरनरकिन्नरगन्धर्वादयः सर्वतोदिशं गताः सम्भूय, समायान्तु — इति, अभि-सन्धाय, क्रियमाणा मुरजमृदङ्गतालादिसामग्रीसहिता सपर्या पूर्वरङ्गत्वान्नान्दीति निगद्यते; अथवा,

"सभ्यान् नन्दयतीत्युच्चैः सा नान्दीति निगद्यते"

इति वचनात् सभ्यावर्जनरूपा सपर्येति एवंविधा नान्दी ।

नाटकादिरूपकाणां आदौ विहितं पद्यं नान्दीति उच्यते ।

अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम् ॥
यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ।
द्वाविंशत्या पदैर्वापि सा नान्दी परिकीर्तिता ॥ इति प्रतापरुद्रीये ।

नाटकादौ कर्तव्यः प्रत्यूहपरिपन्थी कर्मविशेषः;

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गस्स कीर्तितः ॥

इति वचनात् । तस्य प्रत्याहारादीनि द्वाविंशतिरङ्गानि । तन्मध्येऽवश्यं कर्तव्या नान्दी । तदुक्तं बादरायणेन —

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥" इति ।

चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ।
आशीर्नमस्क्रिया वस्तुनिर्देशो वा प्रकल्प्यते ॥

इति विशेषोऽत्र द्रष्टव्यः ।

लक्षणं च सिद्धम् । रङ्गमङ्गलनिधिरिति [1]रङ्गप्रसाधनं च कृतं भवति ।

एवं सर्वत्र अभिधा - लक्षणा - गौणी - व्यञ्जनावृत्तिषु अन्यतमया वृत्त्या सर्वशब्दानां वेदान्तपरत्वं स्वयमेव ऊहनीयम् ।

**भास्वानेषेति** । एतेन आचार्यप्रवृत्तेः परप्रयोजनपरत्वमुच्यते ।

**अद्वितीयः** — असदृशः, देहवत् स्वाधीनतया देहः ।

**आत्मविद्या** — अध्यात्मविद्या, स्वविद्या च । **भरतमुख्या मुनयः** — ब्रह्मविदः शुकादयः, नाट्यसूत्रप्रणेतारश्च । **आत्मलाभः** — जीवपरमात्मलाभः, स्वार्थलाभश्च ।

**विद्वान्निति** — ब्रह्मवित्, भगिनीपतिश्च "भगिनीपतिरावुत्तो विद्वान्" इत्यमरः ।

संक्षेपेण चतुर्विधा जीवराशय उच्यन्ते — **सुरनरेति** ।

**वेदान्तकूटस्थः** वेदान्तसम्प्रदायमूलगुरुः । **यच्छिष्याः** - वेदव्यासभट्टादयः ।

---

1. सूत्रधारेण द्वितीयेन रङ्गप्रसाधनं नाम—सभापतावुपविष्टे रङ्गप्रविष्ट — साम्प्रदायिकसम्पादितो यवनिकापगमाविर्भूतपात्रविशेषप्रकीर्णपुष्पाञ्जलिपरिष्कृतो नृत्तगीतवाद्यविशेषप्रयोगः, केवलगीतवाद्यविशेषप्रयोगो, गीतादेरेकैकशः प्रयोगो वा ।

एतच्च — "सङ्गीतज्ञैर्बुधैस्सार्धं नायके प्रेक्षके स्थिते ।
प्रविश्य रङ्गभूमिं ते तिष्ठन्तः साम्प्रदायिकाः ॥"

इत्यादिना सङ्गीतरत्नाकरे प्रपञ्चितम् ।

नान्द्यनन्तरं प्रविष्टेन सूत्रधारेण रङ्गप्रसाधनपुरस्सरं भारतीवृत्त्याश्रयणेन श्लोकैः काव्यार्थः सूचनीयः । तथोक्तं दशरूपके —

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥

इति नाटकलक्षणविशेषाः लक्षणग्रन्थेभ्योऽवगन्तव्याः ।

प्रज्ञाशोधनाय *प्रहेलिकामाह — चित्रकूटेति । अर्थप्रकरणादिनिश्चितं तदर्थमाह — तस्य स्वरैरिति । अचः – स्वरा इति, स्वरा अकारादयः ।

"चक्रं रथाङ्गे सेनायाम् ।" चटुलस्फुलिङ्गकलितचक्रमिति – सुदर्शनविशेषणम् । अन्यत्र चक्रमिति – सेना । रिङ्गत्तुरङ्गेति विशेषणस्य सेनापरत्वमुच्यते । सङ्ख्यं – युद्धं । शुण्डालः — गजः ।

भावाः, रसाः – इत्यादयः । रसः – शृङ्गारादिः ।

यथाहुः —

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा - विस्मय शमाः स्थायिभावाः प्रकीर्तिताः ॥

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः ॥ इति ।

रसो — ब्रह्म च । "रसो वै सः" इति श्रुतेः । भावाः – चिदचित्पदार्थाः । वेदमौलिः — वेदान्तो नायकः ।

हरिरिव अहमपि रङ्गप्रियो भवामीत्याह — सुरनरेति । नायमभिनयति, किं तु, स एवायमिति प्रेक्षकाणां यथा निश्चयः स्यात्, तथा अनुकार्यरामाद्यवस्थां प्रत्यक्षयन् । भरतम् — नाट्यशास्त्रम् । भाव - राग तालनामाद्याक्षराणां ग्रहणेन भरतम् ; भरतमुनिश्च । धर्मपुत्रादयो वा । स्थायिभावाः — स्थावरजङ्गमाः । तेष्वन्तर्यामितया अवताररूपेण वा विहरति । मधुरिपोरपि सर्वलोकविदितोऽहमेव रङ्गप्रियः – इत्याह – अथवेति ।

---

* आमुखस्य वीथ्या इव उद्धात्यकादीनि त्रयोदश अङ्गानि सन्ति । तत्र नालिका नाम— सोपहास निगूढार्था नालिका; निगूढो - गोपितो, बाह्यः, आभ्यन्तरो वा मुख्यार्थो यत्र सा तथोक्ता । अत एव अन्तर्लापा, बहिर्लापा चेति द्विविधा प्रहेलिका । तदुक्तं विदग्धमुखमण्डने —

"व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥" इति ।

**मुक्ताः** — अनादिसंसारबन्धरहिताः । ते विशेषगुणरहिताः - इति न्याय-वैशेषिकाः । निर्गुणब्रह्मात्मकाः — इति मायावादाः । तदन्यमुक्तं विगुणीकृतेति । "सोऽश्नुते सर्वान् कामान्," "कामरूप्यनुसञ्चरन्" – इत्यादिषु श्रुतिषु, भोग-मात्रसाम्यलिङ्गादिति सूत्रेषु. मुक्तस्य कल्याणगुणग्राहिभिः । तज्ज्ञैः - मुक्तिस्वरूपज्ञैः । हारपक्षे, गुणः -- सूत्रम् । स्पष्टमन्यत् ।

**अप्राकृते** — वेदान्तविषयतया प्राकृतलोकातिवर्तिनि । "स्त्रीणां तु प्राकृतं प्रायः शौरसेन्यधमेषु च" इति, भाषानियममुक्त्वा, "कार्यतश्चोत्तमादीनां कार्यो दोषाव्यतिक्रमः" इति अपवाददर्शनात् सर्वपात्राणामत्र संस्कृतमेव । तत्र हेतुभूतं कार्यमाह — **ब्रह्मसूत्रीति** । वेदान्तसूत्रार्थस्य प्राकृतादिभाषान्तरान्वये दुर्ग्रहत्वं स्यादिति च भाषानियमः । तत्र नाटकधर्मं पुरस्कृत्य वेदान्तार्थो व्यङ्ग्यः । तस्यैव प्राधान्या-दिदं काव्यं ध्वनिः ।

वकुलाभिराम - शब्देन तत्प्रबन्धो लक्ष्यते । श्रुतिः - वेदसारः । **शुक-मुखाः** - ब्रह्मविदः । हरिरिव तत्त्वं - हरितत्त्वम् । तत्त्वान्तराणां तत्त्वाविशेषणत्वात् । **उच्चैः** - सर्वस्मात् परम् । शाखाकोटिषु — काण्वमाध्यन्दिनाद्युपनिषत्सु । महानागमः सम्हूहः । **आगमाः** – वृक्षाश्च । सरलवकुलाः - वृक्षविशेषाः । हरितत्त्वं श्यामत्वं च ।

**तीर्थीकृत्य** — शास्त्रीकृत्य । **माधवः** – विष्णुः, वसन्तश्च । **सुरभयः** - सारवन्तः । **समयः** - सिद्धान्तः । "समयाः शपथाचारकालसिद्धान्तसंविदः" ।

**सुमनसः** — विद्वांसः, पुष्पाणि च । **प्रबन्धाः** - ग्रन्थाः, सन्ततयश्च । श्रुतिमुखपरैः पूर्वाचार्यैः । **पुष्टाः** - पोषिता । **षट्पदालापाः** - शरणागतिमन्त्राः । **सुदृशां** - सुधियाम्, स्त्रीणां च ।

प्रपञ्चं निह्नुवानं अन्धकारम् - इत्यन्वयः । अनेन काव्यार्थः सूच्यते । तमेव विवृणोति सर्वैःरति - बौद्धादिसमयैः । **अद्वितीयं** - असदृशम्, विशिष्टाद्वितीयमिति वा ।

[1]इति प्रस्तावना

---

1. सर्वस्यापि काव्यार्थस्य सूचिका भारतीवृत्तिः । तस्याः चत्वारि अङ्गानि — आमुखं, प्ररोचना, वीथिः, प्रहसनं चेति । तत्र आमुखं नाम :—

## अथ विष्कम्भः

निदानं तु - आदिकारणम् । क्षरणं - प्रकाशनम् । कुहना - माया । समयैः - दर्शनैः । एषु - असुरेषु । तानेव । "सुदर्शनावतारो यतिराजः" - इति हि ऐतिह्यम् ।

---

सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥

प्रस्तावना वा, यत्र स्यात् कथोद्घातः प्रवर्तकम् ।
प्रयोगातिशयश्चेति त्रीण्यङ्गानि आमुखस्य तु ॥

द्वावत्र सूत्रधारौ; एकः पूर्वरङ्गविधायकः, अपरस्तु न ट - स्थापकाद्यपरपर्यायः पूर्वसूत्रधार-सदृशगुणाकृतिः प्रस्तावनाप्रवर्तकः । अस्य गृहिणी - नटी । मारिषः - पारिपार्श्वकः । नर्मसचिवो - विदूषकः ।

एतेषां लक्षणानि भावप्रकाशे —

आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥

चतुरातोद्यभेदज्ञा तत्कलासु विशारदा ।
करणाभिनयज्ञा च सर्वभाषाविचक्षणा ॥

नटानुयोक्त्री कृत्येषु नटस्य गृहिणी नटी ।
भरतेनाभिनीतं यो भावं नानारसाश्रयम् ॥

परिष्करोति पार्श्वस्थः स भवेत्पारिपार्श्वकः ।
तदाज्ञप्रतिभो नर्मचतुर्भेद प्रयोगवित् ॥

वेदविन्नर्मवादो यो नेतुः स स्यात् विदूषकः ।

स्थापकः—दिव्यं वस्तु दिव्यो भूत्वा, मार्त्यं वस्तु मर्त्यो भूत्वा, मिश्रं वस्तु उभयोरन्यतरो भूत्वा सूचयेत् । तदुक्तम् —

पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यार्थं स्थापयेन्नरः ॥

दिव्यमार्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ इति ।

वेदान्तस्य नायकधर्मा उच्यन्ते - **सर्वस्येति** । **हितं** - पुरुषार्थोपायम् । **समयाचारान्** - दर्शनधर्मान् । मायाकल्पितौ जीवपरौ येषां, तान् । **मायया** — कपटेन । **आजीवः** - जीवनम् । "आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने" इत्यमरः । **मानेषु** - प्रमाणेषु । **मानप्रतापोन्नतः** । मानः - चित्तसमुन्नतिः । प्रतापः - प्रसिद्धिः । मानेन प्रतापेन च । **नीतिषु** - उपक्रमोपसंहारादिन्यायविशेषेषु, राजनीतिषु । गुणान्तराभ्यां अनभिभूतसत्वगुणो - महासत्त्वः ; महाबलश्च । **स्थिराङ्गः** । अङ्गं - व्याकरणादि । **सुभगः** - मनोहरः । सत्वशब्देन तत्कार्यं ज्ञानं लक्ष्यते । "नॄन् - पुरुषान्, मोक्षप्रदानेन, पाती" ति - नृपः । **समयाचाराः** देशकुलधर्माचाराः ।

एवं सर्वत्र अर्थतः, शब्दतः, तात्पर्यतश्च वेदान्तपरत्वं ऊहनीयम् ।

**विषयः** - प्रतिपाद्योऽर्थः, देशश्च । **नासीरैः** - अग्रेसरैः । **प्रत्यक्षानुमानशब्दाः** - वेदान्तानुकूलप्रमाणानि । **तदाभासाः** तैः प्रमाणैः प्रत्यक्षादिप्रमाणोचिताङ्गहीनतया **प्रत्यन्तः** - म्लेच्छदेशः । ते च । **तैः** - प्रत्यक्षानुमानाभासैः प्रोत्साहिताः पाषण्डसमयाः । **तानेव** — प्रमाणाभासानेव । **तीर्थीकृत्य** - शास्त्रीकृत्य । **अलीकं तु** - अप्रियेऽनृते ।

"चिन्मात्रस्यैव सत्यत्वात्, तस्य च स्वयंप्रकाशत्वेन प्रमाणाविषयतया, सर्वोऽपि वेदान्तविषयः मिथ्येति" - मायावादरहस्यम् ।

**शङ्करगिरि** - शङ्करभाष्ये । "गीर्वाग्वाणी सरस्वती" शङ्करगिरिः- कैलासः । **रामानुजः** - यतिराजो, लक्ष्मणश्च । **ओजः** - बलम् । **भरताद्यः** — ब्रह्मविदः, भरतशत्रुघ्नादयश्च । सत्यं साम्राज्यं विषयं ; न तु असदिति भावः ।

## इति [1]विष्कम्भः

---

**शुण्डीरः** - समर्थः । **मानार्थयोः** - प्रमाणप्रमेययोः । व्याव‌हारिकतया

---

1. वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥
इति तल्लक्षणात् । अत्र शुद्धविष्कम्भः ।

(सत्त्वहीनो) सत्त्वबुद्धिरहितः । मायया कल्पितो जीवो यस्य सः । **सुमतिः** – देवी । **सुनीतिः** - तत्सखी ।

ब्रह्मविद्यादिभेदेनैव शास्त्रनिर्वाहः । तच्च सर्वं प्रमाणेन साधयति । मोक्षोपायतया मदीयमर्थं हरन् - स्वीकुर्वन्नपि ।

**यामुनेन** सिद्धित्रयमुखेन ।

**पटच्चरं** - जीर्णवस्त्रम् । परमहंसस्य वृक्षमूलमेव आवासस्थानमित्याह - वसतिमूलमिति । **ईषणा** - इच्छा । सा च पुत्रेषणा, वित्तेषणा, दारेषणा - इति त्रिधा । **वर्गधर्माः** - अर्थकामाः । आत्मन्यारमत इति **आत्मारामः** । **अपहतविषयः** – दूषितप्रमेयः ।

अभ्युदयनिमित्तं सूचयति – " मदन्तःसन्तापम् " - इति । पटीरद्रवमिलन्मुकुन्दोरसि ।

**निक्षेपविद्या** – प्रपत्तिविद्या । **गद्यात्मना** - शरणागतिगद्यरूपेण । स एवायमिति । अर्थापत्त्येति शेषः ।

**अविद्यया**– देहेन्द्रियमनःप्राणादिषु अनात्मसु आत्मबुद्ध्या । **विध्वस्तान्**– नाशितान् ।

तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥

इति भावः ।

**निरनुक्रोशैः** – निर्दयैः ।

धीरसत्त्वैः नद्यरण्यपुरुषैः चिरं परिचयं यः करोति, स एतान् परिभवति ; नान्य इत्याह — **नापरैरिति** । नक्रव्याघ्रादिहिंसकमृगाः - सत्त्वानि ।

श्लोकद्वयेन माधवसमयः सूच्यते । **वेला** – कालो, मर्यादा च । **कुदृष्टिभिः** - वेदस्य अन्यथार्थवादिभिः । **शिवो** - रुद्रः, शैवागमप्रणेता । **उलूकः** - वैशेषिकप्रणेता । **श्रुतिकटूक्तिभिः** - वेदविरुद्धवाक्यैः । अजितो जयतीति,

अभिजित् । अन्यत्र शिवो — गोमायुः ; उलूकादयो - दिवान्धाः ; अभिजिन्मुहूर्तो वैष्णवः । मध्यमेन तेजसा ।

मध्यमा मूर्तिः - विष्णुः । तत्पदं - आकाशम् । मधुविद्यायाम्—अग्नितो वसुरुद्रादिभि- र्देवैः आदित्यो मधुरूपः पीयत इति श्रूयते । मध्यमो वेदः - यजुः । "यजुर्वेदे तिष्ठति मध्येऽह्नः" इति श्रुतेः ।

दीप्तताराकं - तारकब्रह्मोपास्यम् ; दीप्ततारकं तारकब्रह्म - प्रणवः ।

"य एषोऽन्तरादित्ये हिरण्मयः पुरुषः, तस्य कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम" इत्यन्तरादित्यविद्याप्रकाशनमाह — उन्नामेति ।

एक एव धर्मः सङ्कल्पभेदेन द्विधा भवतीत्याह - तत्त्वनिरूपण इति ।

कर्म - कर्तृ - करण - फलादिरूपः प्रपञ्चः परमार्थ इति वेदान्तस्य तात्पर्यम् । तत्सर्वं मिथ्येति मायावादः, सौगतश्च । तदाह — प्रकृत्या वेदविरोधिनाविति ।

यद्वा, चार्वाक - सुगत - दिगम्बराः वेदमेव नाङ्गीकुर्वन्ति ; मायावादः तदङ्गीकुर्वन्नपि मिथ्येत्याह ।

नैयायिकाभिमतजगत्सृष्टिसंहारेश्वरनिषेधात् कबन्धमीमांसकस्य नैयायिकादि- विरोधः । आत्मनिरपेक्षं - स्वव्याघातमविज्ञायेति यावत् । स्वाङ्गमात्रशेषः - तर्क शून्यकेवलशिक्षाद्यङ्गवान् ।

धर्मार्थो वेद इत्याह — त्वद्भिन्नमिति ।

कच्छवत् सागरं तृणीकृत्य, तद्रक्तसिन्धौ — सोमकरक्तसिन्धौ ।

ऊहैः - तर्कैः । कठोरा घोरैः - कठोरमार्गैः । द्विजाः - विप्राः, पक्षिणः - मांसभुजः ।

इति वेदान्तविलासटीकायां प्रथमोऽङ्कः[1]

---

1. अङ्कस्वरूपं तु —

प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ इति ।

## अथ द्वितीयोऽङ्कः

चार्वाकः स्वमतमवतारयति—मुंक्ष्व इति । पञ्चभूतात्मके देहे ज्ञानमुत्पद्यते पाकविशेषात् किण्वादौ मदशक्तिवत् । किण्वं - सुराद्रव्यम् ।

भक्ष्याभक्ष्ये, गम्यागम्ये - इत्यादिनियमो नास्ति । देह एव आत्मा । अर्थकामौ पुरुषार्थौ । नास्ति परलोकः । बुद्धिसामर्थ्यरहितस्य जीवनोपायो धर्म इति हि लोकायतम् ।

---

नायकस्य यदेकाहचरितप्रतिपादकः ।
एकप्रयोजनाश्लिष्टस्तत्रैवासन्ननायकः ॥

विदूषकादिभिः पात्रैर्योज्यस्त्रिचतुरैरपि ।
समस्तपात्रनिष्क्रामावसानोऽङ्कोऽभिधीयते ॥

इति च निरूप्यते ।

एककार्यान्वितेष्वत्र कथांशेषु प्रयोगतः ।
अवान्तरैककार्यस्य सम्बन्धः सन्धिरुच्यते ॥

इति प्रतिपादितरीत्या एकेन - मुख्येन प्रयोजनेन अन्वितानां इतिवृत्तखण्डानां अवान्तरैकप्रयोजनसम्बन्धरूपाः । पञ्च सन्धयः नाटके निबध्यन्ते ।

तेषां स्वरूपं तु :— पञ्च — अवस्थासमन्विताः पञ्च - अर्थप्रकृतयः, क्रमेण पञ्च - सन्धयो जायन्ते: तत्र ।

(१) आरम्भबीजसम्बन्धः — मुखसन्धिः ;
(२) प्रयत्नबिन्दुसम्बन्धः — प्रतिमुखसन्धिः ;
(३) प्राप्त्याशापताकयोः सम्बन्धः — गर्भसन्धिः ;
(४) नियताप्तिप्रकर्योः सम्बन्धः — विमर्शसन्धिः ;
(५) फलागमकार्ययोः सम्बन्धः — निर्वहणसन्धिः । इति ॥

यथोक्तं दशरूपके —

बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥

अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ।
यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ॥ इति ।

साङ्गोपाङ्गानामेतेषां समन्वयस्तु यथासम्भवं स्वयमूहनीयः ।

वासांसि - स्वर्गः, स्त्रियः - स्वर्गः इति, कबन्धमीमांसका । विध्यर्थवाद-मन्त्ररूपेण त्रिविधो वेदः । तत्र मन्त्रार्थवादेषु हि देवता - तल्लोक - सर्वेश्वरादिसिद्धिः ।

विश्वोऽविद्याकल्पितः; ज्ञानमेव सत्यमिति - बौद्धमार्गः ।

वेदान्तप्रतिपाद्यं सर्वमसत्, विज्ञानमेव सत्यम्; एतच्च विज्ञानं वेदान्तविषयम् — इति ह्याहुः राहुमीमांसका. ।

इति विष्कम्भः

राज्यं — विषयः । हतकण्टकं - हतप्रतिपक्षम् । अहिभयं - अन्तर्विरोधः । "महीभुजामहिभयं स्वप्रभवं भयम्" इत्यमरः ।

प्रत्यक्षादिज्ञानस्य क्षणिकत्वात् "इदमस्माद्भिन्न"मिति धर्मिग्रहणपूर्वकप्रतियोगिस्मरणसापेक्षभेदग्रहणानुपपत्तेः प्रतियोगिसापेक्षभेदस्य तन्निरपेक्षस्वरूपानुपपत्तेश्च । ग्राह्यभेद - तद्ग्राहकप्रमाणयोरनुपपत्त्या अन्योन्याश्रयदुष्टत्वाच्च भेदप्रसङ्गरहितम् ।

"इदमस्मा"दिति पुरोवर्तिप्रतियोगिनोः भेदेन ग्रहणे सति "इदमस्माद्भिन्न"मिति भेदग्रहणम्; भेदग्रहणे सति पुरोवर्तिप्रतियोगिनो ग्रहणम् - इत्यन्योन्याश्रयः । इदमस्मादभिन्नमिति अभेदग्रहणपक्षेऽपि समानोऽयं दोष इति, सिद्धान्ते भेददोषपरिहारः । भेदाभावेऽपि, याग तत्करण तत्कर्तृतत्फलादिरूपेण विहितात्मभेदः । यद्वा — आत्मैकत्वेऽपि अनेकात्मभेदः । उभयोर्वेदत्वाविशेषात् भ्रातृत्वम् ।

देवतास्वर्गादि - तल्लोकनिराकरणात् चार्वाकत्वमारोपयति — शब्दैरिति । "अथातो धर्मजिज्ञासे"ति धर्मपरोऽपि ।

ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥

इत्यादि प्रमाणसिद्धमनङ्गीकुर्वन् कृत्स्नस्य वेदराशेरेकप्रमाणत्वे परस्परविरोधासम्भवेऽपि विरोधः कुत इति रहस्यं चिन्तयति — सिद्धं नस्समीहितमिति ।

मिथ्यादृष्टिविलासमोहितं — सर्वं मिथ्येति सयुक्तिकमज्ञानमोहितं कृत्वा, एन·

मपलभ्य। मायाविलासिनीविलासान् — मायैव विलासिनी। तद्विलासान् अविद्याकृतान् दहरविद्यादिरूपान्।

मिथ्यादृष्टिः — मिथ्यामतिः। इह - अस्मिन् लोके। मर्त्यः बालो वा भवतु, यदि वा जरन् भवतु। असौ मया स्पृश्येत यदि—इत्यन्वयः। युवा तिष्ठत्विति, वाक्यान्तर्वाक्यम्। असौ बालो जरन् विरक्तोऽपि मया स्पृश्येत चेत्, न केवलं मुक्तिं, भुक्तिमपि जहातीत्याह - कृत्याकृत्येति।

अन्यथा - विपर्यस्तम् मधुरैरित्यादिना मिथ्यादृष्टेस्सर्वं संमोहनसौभाग्यमाह।

प्रामाणिकसमन्वयाविरोधसाधनवन्तमपि राजानं मोहयितुं मिथ्यादृष्टिसौभाग्यं दर्शयति — प्रकाशमिति।

सबहुमानं — "सर्वं मिथ्येति मतिर्वेदान्तसमुचिते" त्यनेकप्रमाणसहितं यथा भवति तथा।

वारी तु — गजबन्धनी। उर्वश्यसि पुरूरवा असीति, ताभ्यामुत्तराधरारण्योर्निरूपणात्।

वेदविचारविरोधं दर्शयति — भवद्याज्येति।

अहङ्कारे ब्रह्मप्रतिपादनमेव जीवः - इति मायावादः। नित्याः, सत्याः, कर्तृत्वभोक्तृत्वविशिष्टा एव जीवाः; तद्व्यतिरिक्तं ब्रह्म हि नास्तीति कबन्धमीमांसकः।

बौद्धबहुमता मिथ्यामतिः। वेदान्तमात्मसात्कर्तुमुपक्रमते - राजानं कण्ठ इति। प्रेयसीवाक्यस्य सर्वं मिथ्येति मतौ वेदान्तस्य प्रीतिर्नास्तीति भावः। मिथ्यादृष्टिः वेदान्तं स्वाभिमुखं कर्तुमाह — मन्दारेति। सपीतिः — सहपानम्। "सपीतिः स्त्री तुल्यपानं सजग्धिः सहभोजनम्" इत्यमरः।

केचित् प्रत्यक्षमपि अपलपन्ति, केचित् परोक्षम्। उभयापलापित्वात् त्वय्येव अहमत्यन्तानुरक्तेत्याह — पुरुषा भयेति।

विप्रतिपन्नं प्रति सर्वं मिथ्येत्याह — वेदाः शास्त्रमिति।

स्वाननुमतमपि भाष्यकारमनुविधत्ते—रागान्धस्ये त्यादिना । सोल्लुण्ठमाह— त्वत्सङ्ग इति ।

अज्ञातपूर्वां – इतः पूर्वं मया मद्व्याख्यातृभिर्वा अज्ञातपूर्वाम् । आभोग-स्तनमन्थरैरिति मिथ्यादृष्टेस्सर्वजनमोहनसौभाग्यमपेक्ष्यते । सर्वं मिथ्येति ज्ञानमित्य-भिप्रायं रागातिशयेन छादयति – आनन्दामृतेति ।

एतादृशानां वाक्यानां अतिगम्भीरत्वात् एषामर्थो व्याख्यातुं न शक्यते; प्रकरणानुगुणमेव ऊहनीयः ।

महावाक्यमाह – तत्त्वमसीति ।

छाया :—

भवति तव वेदमौले कीर्तिर्मुक्तावलीव कण्ठगता ।
गायन्तीनां मधुरं भूपा गन्धर्वराजकन्यानाम् ॥

कण्ठे हारलता, अपि च कपोलफलके कर्पूरपत्रावली । धम्मिल्ले अ म्मि – धम्मिल्ले च, मल्लिआ – मल्लिका, मुणिवहूवग्गस्स – मुनिवधूवर्गस्य, णिग्गच्छइ - निर्ग-च्छति । कीर्तिमौक्तिकनिर्मला तव महामोक्षैकदीक्षागुरोः । जोह्णा होदि — ज्योत्स्ना भवति । विपक्षदर्शनश्रीवक्त्रारविन्देषु ।

भरतशब्देन — शुकपराशरादय उच्यन्ते । तेषां चिदचिदीश्वरभोग-मोक्षादिविषये शास्त्रमिषेण क्वचित् मिथ्यामतिप्रवेश इति भावः ।

मिथ्यामतिः प्रमाणदुर्ग्रहेत्याह - गृहीताऽप्ययंशुके इति । वितथामपि तां सत्यामिव भाष्यादिप्रियार्थं उपलालयति —– हा प्रिये इत्यादिना ।

काष्ठा - चरमसीमा । अनुक्रोशः - कृपा । मायाविलासिन्या - अविद्यया ।

"कश्चिद्रजकः क्षामकाले भक्षणार्थं व्याघ्रचर्मणा समाच्छाद्य गर्दभीं विसृष्ट-वान् । सा प्रयत्नसंवर्धितान् कलमान् भक्षयन्ती व्याघ्रभयेन मञ्चगतं कम्बलावृतं कलम-वाचकं दृष्ट्वा गर्दभशङ्कया ररास । तदा निर्भयं तां कलमपालो जघान " इति कथां स्मारयति – हा मुग्धेति ।

मिथ्यादृष्टिचरितमाह - आबालगोपमिति । आत्मानमेव शुल्कं दत्तवद्भिः मिथ्याज्ञानमुषितात्मभिरित्यर्थः ।

**पुंश्चली** - पुंसः चालयति - स्वरूपज्ञानात् भ्रंशयतीति ।

राज्ञः स्वाभाविकं मिथ्यामतिविरोधं दर्शयति - **कुहककुटुम्बिनीति** ।

**सुनीतिः** - प्रच्छन्नपात्रम् । भर्तुः छायासम्बन्धमपि न सहन्ते ; किमुत योषिदन्तरम् । न्यायोपबृंहितप्रमाणरहितं वेद्यमेव न भवतीत्याह - **सुमते - सुनीतिरहितमिति** ।

सुनीतिः भयात् दैवं शङ्कते - **मायानादवशेति** ।

यतिराजं स्वानुकूलार्थनिरूपकं कर्तुमभिप्रायवानाह - **तद्भवतेति** ।

**यथाप्रमाणम्** - प्रत्यक्षानुमानागमासिद्धं सर्वं प्रमेयजातं सत्यं भवति, नासत्यमिति भावः ।

तत्र सम्प्रदायं दर्शयति - **भगवान् यामुनोऽपि इति** । अत्र व्याख्यानादपि-मूले सर्वं सुगमम् ।

**रसालः** - चूतः ।

वासनातिशयमाह—**श्रेयसीति** । मिथ्यादृष्टिसंसर्गपरिवादात् यतिराजवाक्यात् ।

प्रपञ्चो मिथ्येति मतिः राज्ञो न नष्टेत्याह - **एवमप्यस्य इति** ।

इति वेदान्तविलासटीकायां

द्वितीयोऽङ्कः समाप्तः ।

# अथ तृतीयोऽङ्कः

'सदेव सोम्ये" त्युपनिषत्—सद्विद्या । सदूहः - सुविचारः । मन्त्रिपदे - भाष्यकारपदे । मायावादः सुतर्क इत्याह — सेनापतिरिति ।

शं - सुखम्, फालयति - दारयति - इति, मिथ्यादृष्टिः - शंफळी, मोक्षसुखविरोधित्वात् । न विरमति । परित्यागेऽपि तद्वासनालेशोऽनुवर्तत इति भावः ।

सपरिवाराः । स्मृतीतिहासपुराणादयः — परिवाराः । शंसनं - प्रार्थनम् । भास्कर - यादव - मायावादाः परस्परविरुद्धा इत्याह - रामानुजकृतोपजाप इति । उपजापः - अन्तर्भेदः । बहुमानं - बहुप्रमाणम् । सद्विद्यैव ज्ञानरूपत्वात् सुमतिरित्याह - मदभिन्नाया इति ।

## इति [1]प्रवेशकः

यामुनकृतावलम्बी - यामुनमतप्रिय इत्यर्थः । मायावाददर्शितमार्गः — इत्यनेन सर्वं मिथ्येति, मार्गः वेदान्तानभिमत इति सूचितम् । मन्त्रिणः - भाष्यकारादयः । स्वस्वभाष्यानुकूलं वेदान्तं मन्यन्ते - इत्याह - स्वगतमित्यादिना ।

बहुव्याख्यातृपरस्परविरोधखिन्नः पृच्छति सन्न्यस्तभार इति । रिपुप्रसङ्गः — विरोधिमततर्कः । विषयं - प्रतिपाद्यमर्थम् ।

वेदान्तमाहात्म्यमाह—राजन्निति । पुरुश्चक्रवर्ती आदिः येषां । ब्रह्माण्डान्तरेष्वपि अयमेव वेदान्तो मुमुक्षुभिस्सेव्य इत्याह — ब्रह्माण्डकोटयेति ।

प्रत्यक्षादिप्रमाणानि स्वस्वार्थोपस्थापनेन वेदान्तशेषभूतानीत्याह - प्रत्येकं नियत इति । प्रमाणानुग्राहकस्तर्कः - इत्याह — तर्कदंसितेति । "ते ये शतम्", "ते ये शत" मिति शतगुणोत्तरम् । लीलाविभूतिर्नित्यविभूतिरिति, द्वे विभूती ।

"नेदं नेद" मिति मिथ्याभूतप्रपञ्चपर्युदासरूपचिन्मात्रस्य तदितरप्रपञ्च ब्रह्मव्यतिरिक्तप्रपञ्चसाधकः स्वानुकूलत्वादाह - महाराजमिति ।

---

1. वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । प्रवेशकस्तु नाट्येऽङ्के नीचपात्रप्रयोजितः ॥ इति प्रवेशकस्य लक्षणम् ।

ब्रह्मव्यतिरिक्तप्रपञ्चसाधकः स्वानुकूलत्वादाह - महाराजमिति । ब्रह्मव्यतिरिक्त— सत्तेत्युपाध्यङ्गीकारादाह—तत्त्वमपि कदाचिदिति । चिदचित्प्रपञ्चसद्भावस्य अभिमतत्वादाह - तमेति । स्वाभिमतत्वादाह - प्रमाणान्तीति ।

अन्वारुह्य अनवस्थां दर्शयति - प्रमाणसिद्धौ प्रमाणापेक्षायां अनवस्था । तदपेक्षायां प्रमाणवत् प्रपञ्चोऽपि तथ्यः स्यादिति, न प्रमाणमनङ्गीकरणीयमिति श्लोकार्थः ।

"घटमहं जानामि" इत्यत्र प्रमातृप्रमेयवत् प्रमाणभूतं ज्ञानं स्वेनैव स्वात्मानमपि प्रकाशयतीति भावः ।

इदमहं वेद्मीति, संविदः स्वतस्सिद्धौ नानवस्था सम्भवति । संविदेव हि तत् तवापि प्रमाणमित्यर्थः ।

या खलु तदिति पाठे, या संवित् प्रमाणम् सा संवित् स्वतस्सिद्धेत्यर्थः । तत्त्वं च -- प्रमाणत्वं च ।

ज्ञानस्य प्रामाण्यं स्वतः, अप्रामाण्यं परतः -- इति मीमांसकाः । प्रामाण्याप्रामाण्ये परतः - इति तार्किकाः । पक्षद्वयेऽपि न विरोध इत्याह - स्वतः स्वार्थेति । सोल्लुण्ठनं तु - मर्मस्पृक् ।

"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते" इति पुराणवचनं हृदि निधायाह -- मर्त्यलोकशाम्भवेति । यत्किञ्चिदेवातीति ग्राम्यपरिहासः । तदनिप्रायं जानन्नाह-भो जाल्मेति । जाल्मः - कुहकः । अन्यथा --- असर्वज्ञत्वम् ।

असत्यमपि सत्यवत् प्रतिभासमानं व्यावहारिकम्, तद्रूपयति - मिथ्येति । न हि मिथ्येति विदितो रज्जुसर्पः त्रासं जनयति । न ह्यसत्यमर्थक्रियाकारि । अर्थक्रियाकारित्वात् जगत् सत्यमिति भावः ।

राज्ञः—शास्त्रस्य । मन्त्रिकुलस्य - तद्व्याख्यातृवर्गस्य । परस्परवर्गं तद्राष्ट्रं - तस्य शास्त्रस्य प्रमेयम् । सुखं - अव्याकुलम् । अन्यथा एतत्प्रमेयं नश्यति । अहिभयं - परस्परविरोधः । अत्र राजनीतिः दृष्टान्तः ।

भृगुनारदप्रभृतयो ब्रह्मविदः - अध्यात्मविदः । महारण्यं - अरण्यानी ।

"प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलं प्राप्तिः तथा प्राप्तिविरोधि च ॥"

इति वेदान्तप्रधानप्रतिपाद्या **पञ्चार्थी** । **अम्लानधीः** - प्रतितर्कैरनाकुलधीः । अनेन, श्रवणं, तत्प्रतिष्ठार्थं मननं च उक्तम् । निदिध्यासनमाह—पश्यतीति । "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुतेः । स्वस्मै स्वेन प्रकाशनं प्रत्यक् । तत्फलमाह - **साम्यमिति** । **निरञ्जनः** - कर्म-तद्वासनागन्धरहितः । "निरञ्जनः परमं साम्यमुपैति", "भोगमात्रसाम्यलिङ्गाच्च" इति श्रुतिसूत्रे । **पादाः** - षोडश ।

**पृथग्जनः** - प्राकृतः, भेददर्शी जनश्च । **शून्यकल्पः** - जरद्गवादिवाक्यार्थरहितः ।

मुक्तानां सर्वेश्वरसंकल्पैकरूपस्वसंकल्पानुगुणं पञ्चोपनिषन्मयं शरीरमस्ति इत्याह - **संकल्पसिद्धेति** । **तमसः** - प्रकृतेः । भोगमात्रसाम्यम्, न तु सर्वसाम्यमिति भावः । "भोगमात्रसाम्यलिङ्गात्" "जगद्व्यापारवर्ज" मिति सूत्रव्यवस्था । ब्रह्मणः पूः — **अपराजिता** । अनेन उपकारस्मृतिरुक्ता । **रक्तकण्ठौ** - रागयुक्तकण्ठौ ।

संप्रति अमात्यराजेत्यनेन गण्डमुक्तम् । "गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं त्वरयोदितम्" इति वचनात् ।

बोधायन - द्रमिडादयो विशिष्टाद्वैतग्रन्थकर्तारः ।

"स हि विद्यातस्तं जनय" तीति आचार्यप्रभावमाह - **स किलेति** ।

युगपत् ब्रह्माण्डसंहारपक्षमाह - **ब्रह्मेति** । अण्डाधिपतीनां ब्रह्मणां पराख्यआयुःक्षयो युगपदेव । ततः प्रायः प्रतिसञ्चरस्तु, "पृथिव्यप्सु प्रलीयते" इत्यादिक्रमेण प्रतिसंह्रियमाणेष्वित्यर्थः ।

चेतनाचेतनवस्तुषु वर्णानामाकाशधर्मत्वेन अनित्यत्वेऽपि तत्सन्दर्भैकरूपस्थायित्वमेव वेदनित्यत्वमित्याह— **यथापुरेति** । यथापूर्वं सन्दर्भं वेदान् स्मृत्वा सर्गादौ उपदिशति । "यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः ।

**मन्त्रमाया** — मन्त्रकपटम् । सैव मृगतृष्णा — मरीचिकाजलम् । मरीचिः — मृगतृष्णा च ।

**ब्रह्मसूत्रं** - ब्रह्ममीमांसासूत्रम् परित्यज्य वैशेषिकसूत्रस्य रावणो भाष्यं कृतवानित्याहुः । ब्रह्मसूत्रं - यज्ञोपवीतं च । "अहमेव ब्रह्म, मत्तोऽन्यत्सर्वं मिथ्या" इति च सदसदनिर्वचनीयानाद्यविद्या माया ; कपटं च । तच्च मन्त्रौषधबलेन अविद्यमानस्य विद्यमानवत् प्रकाशनम् ।

कुटीचक - बहूदक - हंस-परमहंसेषु संन्यासभेदेषु परमहंसस्य यज्ञोपवीतत्यागो न दोषायेति मन्वान आह — **त्वमेव किमिति** ।

**नाहमिदानीमेतद्ब्रवीमीत्यनेन** परमहंसस्यापि यज्ञोपवीतत्यागे महान् दोष इति भावः । **शारीरकसूत्रम्** - वेदान्तसूत्रम् । तत्परित्यागप्रकारमाह — **संप्रतीति** । **यथाजातः** - अज्ञः । **अयथाजातः** — यथेष्टजनितः ।

गगनकुसुमकल्पं निरुपाख्यचिन्मात्रं ब्रह्म वेदान्तवेद्यं न भवतीत्याह - **तत्त्व-निरूपण इति** ।

अद्वैतस्य - चिदात्मनः स्वयंप्रकाशस्य वेदान्तवेद्यत्वे विरुद्धतां दर्शयति — **तदाकांक्षायामिति** । मिथ्यात्वम्, अनित्यत्व - जडत्व - नानात्वादीनां उपलक्षणम् ।

वेदान्तवेद्यत्वं च स्वमतविरुद्धमेव । तदुक्तं खण्डने—

आपाततो यदिदमद्वयवादिनीनां
अद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्स्वप्रकाशपरमार्थचिदेव भूत्वा
निष्पीडितादहह निर्वचते विचारात् ॥ इति ।

तन्मतमुद्घोषयन्नुपालभते — **सच्चिद्ब्रह्मेति** ।

ब्रह्मसूत्रपरित्यागे हेत्वन्तरमाह — **कीदृशी मुक्तिरिति** ।

ब्रह्मैव, उत, तद्विलक्षणेति विकल्प्य, पक्षद्वयेऽपि ते मोक्षो न सिद्ध्यतीत्याह — **न साध्या ब्रह्मचेदिति** ।

मायावादमौने हेतुं व्यपदिशति — **तूष्णीकृतेति** ।

आत्तगन्धोऽभिभूतः स्यात् । किं तथैव तिष्ठति । पूर्वं मौनिनो भवत इत्यर्थः । **आलेख्यम्** - चित्रम् ।

अद्वैतस्य अन्धकारसाम्यमाह - **येनेति** । अन्धकारे वस्तुसत्तामात्रं स्फुरति; तत्संस्थानरूपादिभेदो न दृष्टिगोचरः । अद्वैते सन्मात्रम् ब्रह्मैव सत्यम्; तद्व्यतिरिक्तं जगत् दृष्टिगोचरतया अतत्त्वज्ञानगोचरतया मिथ्यैव । घटपटादिवस्तुभेदोऽपि दुर्निरूप इत्याह - **उन्मीलितमिथोभेदेति** । एवं विपरीतज्ञानपरम्परां तन्वन् ।

इति तृतीयोऽङ्कः समाप्तः

---

श्रीः

## चतुर्थोऽङ्कः

ततः प्रविशति केशिध्वजो जनकः । मोक्षोपायता शमदमविरक्त्यादिगुण-सम्पन्नां गीतामाह — **विरक्तिरथेति** ।

कर्म - ज्ञान - भक्ति - प्रपत्तियोगाः मोक्षोपायाः - इति, मोक्षश्च परमपुरुष-साम्यम् — इति गीतातात्पर्यम् ।

वेदोपबृंहणतया तत्त्वपरे श्रीविष्णुपुराणे केशिध्वजेन मुक्तौ जीवस्य परमात्मैक्य-मुक्तमिति मायावादो वेदान्तसभायामुक्तवान् । तदिदं पृच्छति - **नहि नहि इति** ।

संविन्मयेनि श्लोकस्यायमभिसन्धिः — "अस्त्रभूषणरूपसर्वतत्त्वाश्रयभूत-संविन्मय-शुभाश्रयाख्यभगवदसाधारणरूपानुज्ञानात् अज्ञत्वादिवैधर्म्यहेतुभूतनिश्शेषज्ञान-विलये सति अखिलहेयप्रत्यनीक - कल्याणैकतानत्वाभ्यां" भगवता **अभेदो भवति** - तुल्यो भवति इति ।

अनेन ' तद्भावभावमापन्नः ", " विभेदजनके ज्ञाने " इति श्लोकयोः तात्पर्यमुक्तम् । **दर्शितबहुनीतिविप्लवे** — न्यायशास्त्रविरोधे ।

## इति विष्कम्भः

**अधरबिम्बं**—अधरसदृशं बिम्बम् ।

आश्रमधर्माणां "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यत्र ब्रह्मविद्याङ्गत्वमुचितमित्याह — **गृहिणोऽपि इति** ।

तारका—कनीनिका, नक्षत्रं च ।

प्रमाणाभावेऽपि सकललोकसंमोहनचतुराया मायाविलासरूपत्वात्, मिथ्यादृष्टिः — **मायाविलासिनी**त्युच्यते । **सुमतिः**—चिदचिदीश्वरयाथात्म्यमतिः, प्रत्यक्षादिप्रमाणवती । **मद्दर्शितसत्नमार्गः** — मया सूत्रस्थतया दर्शितो मार्गः; अन्यत्र मायावादचिन्तितो मार्गश्च ।

चतुर्विधेषु नायकेषु सचिवायत्तसकलभरो धीरललितः । शास्त्रमप्येवं भाष्यकारायत्तसर्वार्थसिद्धिः; अत एव धीरललित इत्युच्यते ।

**स्वचरितं** — वेदमौलिचरितम् । **समये** — सिद्धान्ते, काले च । **मिथ्यादृष्टिः** — पूर्वपक्षपात्रम् । **भरते** - नटे, ब्रह्मविदग्रेसरे च ।

**किमहमाकुलासि** — इत्यनेन वाक्येन, व्यतिरेकलक्षणया, देवं सुमतिं च बहुभिर्न्यायैर्योजयितुं आकुलासीति सूच्यते ।

अमुमेवार्थं विशदयति - **राजा सोल्लुण्ठमिति** । यामुनः तद्विज्ञायाह — **तन्नु देव इति** ।

वेदान्तं परमार्थतः चिदचिदीश्वरप्रमित्या योजयितुं उपक्रमोपसंहारादिनीतेरेव सामर्थ्यमिति सुनीतिं प्रार्थयते - **युक्तायुक्तेति** । स्वयमेवाभिहितस्य मोक्षतदुपायब्रह्मोपासनाद्यर्थस्य सत्यत्वमसत्यत्वं वा भवितुमर्हति । **निरूपणम्** — परस्परसदृशयोर्वेदान्तसुमत्योर्योजनम् । सगुणनिर्गुणादिवाक्ययोः — उत्सर्गापवादवत्, विषयव्यवस्थया परस्परविरोधशमनम् । **गणिकावत्** - गणवशीकारात् गणिका, **उदारशीलगुणयेति** । संयोजयितुं सुलभेति भावः । पूर्वकाण्डनीतिमवतार्य सकलवाक्यविरोधः शमनीय इति भावः ।

**किं किं न कुर्यात्** — सर्वं कुर्यादेव । तदावर्जनोपायमाह — **किन्त्विति** ।

वस्तुयाथात्म्यज्ञानमत्र सुमतिः; तस्यां वेदान्तः स्वप्रेमातिशयमाह — **आजिघ्रन्निति** । परमपुरुषगुणविधिनिषेधवाक्यकलापस्य विरोधपरिहाराय सामान्यविशेषनीति-

परित्यागे हेतुमाह – **दुर्मन्त्रीति** । सामान्यविशेषादिन्यायस्य स्वारसिकत्वमाह – **ईदृशेति** । **लालित्यं** – भाष्याधीनत्वम् ।

सुमतिसौन्दर्यातिशयमाह – **सासूये इति** । **कैशिकं** – केशसंहतिः । **वैदेशिकं** – देशान्तरगतम् । असदृशमित्यर्थः । **कोटयन्तरे** - विसदृशपक्षे ।

अस्पर्शयोग्यां मिथ्यादृष्टिं लक्षयति - **रथ्याम्भसीति** ।

**वर्धकी** - सकलपुरुषार्थच्छेदकरी । वृधु - छेदने ।

भगवद्विषये प्रीतिरुत्पन्ना मतिसन्ततिरेव – भक्तिः । त्वयि चित्तवान् भवतीत्यनेन अन्यत्र चित्तवान्न भवतीति च गम्यते ।

तत्त्वहितपुरुषार्थमतिः स्वात्मनो वेदान्तप्रेमातिशयं दर्शयति-**पादौ जडाविति** ।

स्वमनोविकारातिशयेन अविकारात्मकं मनः सत्त्वम्; तद्विकारः - स्तम्भादिः विकारः - सात्त्विकः ।

तत्र सखीवचनं मनोविकारपरतया सोपालम्भं मत्वाऽऽह - **प्रियसखि मुग्धेति** । तत्र हेतुमाह - **मानमिति** । **सुदृशां** - विदुषाम्, **मानं** - प्रमाणम् । **तत्खण्डनं** - प्रमाणखण्डनम् । तन्न केनापि कर्तव्यम्; सर्वोपजीव्यत्वात् प्रमाणस्य । तद्भङ्गमपि कुर्वन् । **खण्डनयुक्तिभिः** - असद्युक्तिभिः । व्यक्तापराधो - **धृष्टः** । **तद्दर्शिनी** - मानखण्डनं पश्यन्ती सुमतिः । प्रमितिः किं जीवेत्? जीवत्येव । **अन्यथा** दूषितापि व्यावहारिकसत्तामालम्ब्य जीवामीति चेत् । धूर्तगणिकाशब्देन – मिथ्यादृष्टिर्लक्ष्यते । भुक्तोच्छिष्टं तु निर्माल्यम् । सद्भिः – प्रामाणिकैः ।

एतदुक्तं भवति :— मायावादप्रेरणया सर्वं मिथ्येति दृष्ट्या स्पृष्टस्य राज्ञः प्रियाऽहं न भवेयमिति ।

अन्यत्र मानं अभिमानम् । **सुदृशां** - योषिताम् । **खण्डनहेतवः** - प्रतिनायिकासंभोगचिह्नानि नखक्षतादीनि । तच्चिह्नप्रकाशेन धृष्टः ।

तत्त्वहितपुरुषार्थप्रमितेः स्वानुकूलप्रमाणविरहे, वेदान्तस्य च तादृशप्रमितिविरहे विनाश एव स्यात् । तदुभयं त्वया रक्षणीयमित्याह - **शून्येति** ।

वेदान्तजन्या सुमतिः, कथं तस्य स्त्रीति चेत् - तस्याः नित्यत्वात् ।

तदुक्तम्—“ यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
तथा हेयगुणध्वंसादवबोधादयो गुणाः ॥
प्रकाशन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ ” इति ।

सर्वोऽप्यर्थः प्रमितेरेव विषयः । वेदान्तस्य तु प्रमितिप्रकाशकत्वादित्याह - **यतिराजेनेति** ।

चन्द्रमरुताविति सम्बोधनम् । जडच्छीतलाविति च संबुद्धिः । निर्वापयितृत्वात् । **आत्मनां** - सुहृदाम् ।

**सुनीतिः** वेदान्तेन सह सुमतिं योजयितुं यतते - **किं न पश्यसीति** । **त्रिवर्गेण** । तृतीयेन वर्गेण - कामेनेत्यर्थः । यद्वा, धर्मार्थकामैः ।

सुमतिसंगात् स्वरागपारवश्यप्रच्छादनार्थमाह - **कुण्डलितेति** । **चन्द्रशाला**-शिरोगृहम् ।

**श्रुतिमार्गेति** — पदत्रयमुभयत्र विशेषणम् । **चित्** - आत्मा, तत्र तापः । **चित्तं** मनश्च । तरल इति सम्बुद्धिश्च ।

**नीवी** - मूलधनम् ।

ज्ञानस्य स्वपरप्रकाशकत्वे हेतुमुत्प्रेक्षते — **तत्त्वं तिग्मद्युतिविति** । वाक्यान्त-र्वाक्यम् । तेऽपि दीपरत्नांशवोऽपि ज्ञानायत्तप्रकाशा अपि स्वयंप्रकाशा इति हि लोकप्रसिद्धिः । तामवलम्ब्य उच्यते - **स्वपरप्रकाशता** इति ।

सर्वविषयायाः ज्ञप्तेः तत्त्वाहितावान्तरविषयावयवोपकरणत्वं प्रार्थयते - **हाराणि स्तनमण्डल इति** । **हाराणि** - हारोद्भवानि, एवं लाक्षाणीत्यादि ।

स्वरागातिशयमाह - **कस्तूरीभिरिति** । **गरुडध्वजलाञ्छनानि** - शङ्ख-चक्रकमलादीनि । निर्विकारात्मकं मनः - तत्त्वम् । नेत्रे कुवलयबुद्धिर्मधुकरः ; अह-मुत्पले नेत्रबुद्धिरिति विभ्रमः - विपर्ययज्ञानम् ।

इति वेदान्तविलासटीकायां
चतुर्थोऽङ्कः समाप्तः

---

## अथ पञ्चमोऽङ्कः

जगन्मायावादिनौ नियोगान्मोक्ष इत्याहतुः ; शङ्करस्तु - नियोगसाध्यस्वर्गादिवत् मोक्षोऽपि अनित्यः स्यादिति, तत्त्वमसीति - वाक्यार्थज्ञानादेव मोक्ष इत्याह ; तदुच्यते- सुदर्शन इत्यादिना ।

## इति विष्कम्भः

**सन्न्यासी**—विवरणकारः । **शुक्लपटः** - वाचस्पतिः ।

तत्र, ब्रह्मैव मायामोहितं जीवति ; तत्स्वप्नविलसितं जगत् ; तन्मुक्तौ सर्व- मुक्तिरिति — कस्यचित्पक्षः । अन्यस्य, जलघटगततपनप्रतिबिम्बन्यायेन अनेकान्तः- करणगतपरब्रह्मप्रतिफलनं - जीवाः ; ते च अनन्ताः - इति । तदिदमुच्यते - **भो भो दुरात्मन्नित्यादिना** ।

**नग्नं** - दिगम्बरम् । अलङ्कर्तुं कटिसूत्रमारभ्य सर्वं सम्पादनीयम् । अत्र तु भेदमवलम्ब्य भोगमोक्षादिसर्वव्यवस्था वक्तव्या । **निर्वाणं** - नग्नत्वम् । संन्यासे कौपीनमपि त्याज्यमिति हि - तत्पक्षः ।

यथाकथंचित् भेदे कल्पनीये सति दोषो न चिन्तनीय इत्याह - **काशं- कुशमिति** । एकजीवकल्पनया मायया सर्वनिर्वाहे सम्भवति, बहुजीवकल्पनमविद्या- भेदकल्पनं च न न्याय्यम्, कल्पनाप्रसङ्गादित्याह - **ब्रह्मणीति** ।

ज्ञानबाध्येयमविद्या ज्ञानरूपं ब्रह्म स्प्रष्टुमपि नार्हतीत्याह-**अविद्याचण्डालीति** ।

कर एव वर्णवर्तिका । करे वर्णवर्तिका च । मानं प्रमाणम् ।

मानिनीति सप्तमी ; संबोधनं च ।

**द्वैतसिरा** - द्वैतस्थापनमार्गः । **शिष्यः** - सुतर्कः ।

**सप्तद्वीपप्रदीपः** — सर्वार्थप्रकाशकः । “ एवं चेत् एवं स्या ” दिति हि तर्केणैव बालोऽपि प्रवर्तते । कन्थावत् **कन्था**, दुस्समाधेयदोषत्वात् । **लवनं** —

छेदनम्। **कर्त्तरी** - छेदिनी। कर्तरी सप्तव्यूहः - (१) आत्माश्रय, (२) अन्योन्याश्रय, (३) चक्रक, (४) अनवस्था, (५) केवलानिष्टप्रसङ्ग, (६) प्रतिबन्दी, (७) कल्पनागौरव-भेदात्। तत्र सिद्धान्तः, सैन्यं च।

परिशेषप्रमाणं दर्शयति — **अहमेवेति**।

तद्विरुद्धमर्थान्तरमभिप्रयन्नाह — **एवमेवेति**।

**वातूलः** - वात्या। **रविः** - अर्कवृक्षः। संशप्तकास्तु - शपथात् सङ्ग्रामाद-निवर्तिनः।

पार्थेनैव ते निहता इति दर्शयति - **किमहमिति**। **अपार्थः** - असमर्थश्च। रामानुजः - कृष्णश्च।

**सैरिभाः** — महिषाः। तर्केण तर्के प्रवृत्तो वादः - तर्कातर्कि युद्धम्। वितण्डा - परपक्षस्यैव दूषणम्। यत्संरम्भ इत्यत्र, गलत् प्रेक्षातुर इत्यन्वयः।

आत्मनिरपेक्षं स्वात्मखण्डनमपि ब्रह्मव्यतिरिक्तत्वेन हितम्। आत्मनिरपेक्षत्वे अनिष्टमाह - **तर्हीति**।

व्याघातं दर्शयति - **स्ववचनमेवेति**।

दृष्टान्तमाह - **यद्वीति**।

स्वोक्तिरेव सुस्थिरो बाणः। अन्यत्र स्वोक्तौ स्ववचने रुद्रवचने कृष्णविजये सुस्थिरो बाणासुरः। **बलिना** - बलभद्रसहितेन, प्रबलेन च। **रामानुजः** - यतिराजः, कृष्णश्च।

प्रपञ्चखण्डनसामर्थ्यातिशयमाह - **ब्रह्माण इति**। **पौनःपुनी** - पौनःपुन्यम्। ब्रह्मणो निमित्तकारणम्। **पारीणाः** - पटीयांसः। पुनःपुनर्निर्माणमिति यावत्। **चिखण्डिषा** - खण्डयितुमिच्छा। **न स्मर्यते** - स्मृतिगोचरो न क्रियते।

ब्रह्मव्यतिरिक्तं खण्डयामीत्याह - **ब्रह्मास्त्रमिति**। **समितिः** - सभा, युद्धं च। ब्रह्मैव अस्त्रं - ब्रह्मास्त्रम्। ब्रह्मणोऽस्त्रं चेति। ब्रह्मण्यध्यस्तं जगत् अधिष्ठान-ब्रह्मज्ञानेन हि निरस्यम्। ब्रह्मणोऽस्त्रं च।

मितिः—प्रमितिः, तया सह वर्तत इति समितिः - विद्वत्सभा, युद्धं च ।

"सर्वं खल्विदं ब्रह्म" त्यादिषु तमःप्रकाशवत् विरुद्धस्वभावयोः जगद्ब्रह्मणोः प्रतीयमानतादात्म्यानुपपत्त्या "चोरः स्थाणुः" इतिवत् बाधार्थं सामानाधिकरण्यमङ्गीकरणीयम् । तत्र "नेह नानाऽस्ति किञ्चन" इति श्रुतिबलात् चोरवत् जगत् बाध्यम् । स्थाणुवत् ब्रह्म सत्यम् । निरधिष्ठानभ्रमस्य अनुपपन्नत्वात् अधिष्ठानसत्यत्वमङ्गीकरणीयम्—इत्याह—यस्मिन्निति । अध्यस्तं - आरोपितम् । यथा शुक्तिकाशकले रजतम् । स्वारोपितजगद्द्रष्ट्रपि स्वयमेवेत्याह - यश्च पश्यतीति । स्वव्यति - रिक्तदर्शने हेतुमाह - अविद्यामुग्धमिति । तस्य कदा अविद्यानिवृत्तिरित्याह-निजेति । "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः । ज्ञानं - ज्ञानमात्रं "विज्ञानं ब्रह्म" इति श्रुतिवशात् । तच्च अविद्याकल्पितकर्म - कर्तृ-करण-रूप-रहितमित्याह - ज्ञेयादिति । "यत्तदद्रश्यमग्राह्यम्" इति श्रुत्या न वेद्यमित्याह - अपदं संविदामिति । "निर्गुणं निष्क्रियं शान्तम्, एकमेवाद्वितीयम्" इत्यादिभिः निर्गुणमित्याह - निर्विशेषमिति । "सदेव सौम्येदमग्र आसीत्", "तत्सत्यम्", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिसिद्धं दर्शयति - सत्यं तदिति ।

विवादपदं प्रपञ्चो मिथ्या, दृश्यत्वात्; शुक्तिकारजतवत् । "मृत्युमाप्नोति", "य इह नानेव पश्यति", "नेह नानास्ति किञ्चन" इति प्रमाणबलं दर्शयति—मिथ्या तदितरदिति । उक्तार्थं द्रढयति - कोऽन्यथेति । विस्तरस्तु शास्त्रे द्रष्टव्यः ।

इदमर्थसप्तकं हि शास्त्रप्रतिपाद्यम् ।

तद्दूषयति - आकारेति । चाकचक्यं - भ्रमहेतुः । शुक्तिः - तन्निवृत्तिहेतुः । एवं ब्रह्मण्यपि धर्मद्वयाभावे भ्रमबाधौ न स्याताम् । दृश्यत्वं - दृश्यप्रपञ्चाधिष्ठातृत्वम् । अविद्यापिहितत्वमित्यादि । धर्मविशेषाभावात् द्वितीयं पदं सम्भवति स्वस्वरूपदर्शने स्वस्यैव कर्मत्वं, कर्तृत्वं च । तदुभयाभावे घटादिवत् स्वस्वरूपदर्शनमेव न स्यात् ।

एवमुत्तरत्रापि विशेषाः निर्विशेषब्रह्मणः प्रसज्येरन् ।

सुनीतिः रामानुजविषये नेदमाश्चर्यम् — इत्याह — किमत्रेति । प्रत्यक्षमिति।

मायावाद: स्वतो निर्विशेषस्यापि ब्रह्मणो अविद्याकल्पितविशेषैः सर्वं सम्भवतीति परिहरति—अस्ति खलु अस्माकमिति ।

सुतर्कः तन्मतमुपालभते — आरोपयितुमिति ।

सप्तसु पूर्वपक्षवाक्येषु प्रत्येकं दोषान्तरमाह — किं चेति । निर्विशेषवस्तुनि कार्त्स्न्येन स्वयंप्रकाशे न अध्यासः सम्भवति । स्वरूपव्यतिरेकेण बाधकधर्मानभ्युपगमात् । तत एवाध्यासे सति निवृत्तिश्च स्यात् । द्वितीयं दूषणं तु स्पष्टम् । तृतीयं दूषयति - तत एवेति । तिरोधानाभावादेव संसारमोक्षौ न स्यातामिति भावः । चतुर्थं दूषयति — न ज्ञानमिति । इदमहं जानामीत्यत्र ज्ञातृज्ञेययोरपि ज्ञानेन सहैव सिद्धत्वात्, तयोर्बाधे ज्ञानबाधोऽपि सुवचः । पञ्चमं पदं दूषयति—मतिरिति - प्रमितिः - प्रमाणम् । पदं - विषयः । यत्र प्रमाणं नास्ति, तन्नरविषाणमिव न सता निरूपाख्यम् । षष्ठं पदं दूषयति - त्वयापि निर्विशेषमिति । निर्विशेषशब्देन ब्रह्म विशेष्यते । सप्तमं दूषयति- सत्त्वं स्यादिति । त्वमपि, "ब्रह्मैव सत्; अन्यन्मिथ्ये"ति प्रमाणबलेनैव ब्रवीषि । तथैव प्रमाणसिद्धं जगदपि सत्यमेव । यदि प्रमाणप्रमेयव्यवस्थां दूषयसि, तदा स्वव्याघातः; तदनङ्गीकारे भ्रान्त इति सद्भिरुपहास्य एव । आदिशब्दाल्लोकप्रसिद्धिविरोधश्च ।

पुनश्च प्रपञ्चसत्यत्वं साधयति — प्रत्यक्षेति । दृश्यप्रपञ्चबाधः किं प्रमाणेन; उत, येन केनापि; नाद्यः; — तत्र प्रमाणप्रमेयादिभेदस्य सत्यत्वस्य च त्वया अवश्याश्रयणीयत्वात् ।

नापि द्वितीयः — पामरैरपि भवत्पक्षप्रतिक्षेपस्य येन केनापि अप्रमाणभूतेन कर्तुं शक्यत्वात् इत्याह - बाधस्तथेति । परस्परं भिन्नं चिदचिदात्मकं जगत् ब्रह्मात्मकम् - ब्रह्मान्तर्यामिकम् ।

" सर्वं खल्विदं ब्रह्म "इत्यादि वाक्यं ब्रह्मात्मकतया प्रपञ्चैक्यपरम् । "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादि द्वैतवाक्यम् । ब्रह्मात्मकप्रधान - क्षेत्रज्ञादिपदार्थनानात्वपरम् । निर्गुणवाक्यं — हेयगुणनिषेधपरम् । "यस्सर्वज्ञस्सर्ववित्" इत्यादिवाक्यं ब्रह्मणः कल्याणगुणपरम् ।

एवं ईदृशविरुद्धगिरां भिन्नविषयत्वात् परस्परबाधो न शङ्कनीयः; तथापि

बाधश्चेत्, "न हिंस्या' दिति वाक्येन पश्वालम्भनिषेधोऽपि स्यादित्याह - द्वैताद्वैतेति ।

सकलश्रुत्यविरोधनिर्वाहो न्याय्य इति दर्शयति – सुनीतिमुखं पश्यतीति ।

पदेषु – स्थानेषु; पदात्मकेषु वाक्येष्विति वा । साप्तपदीनं - सख्यम् । "सख्यं साप्तपदीनं स्यात्" इत्यमरः ।

परोऽपि उक्तश्रुत्यविरोधनिर्वाहमनुमन्यते – न हि विधिबाध इति ।

जातिच्छलयोरवलेपः । जातिच्छलादीनां च असदुक्तभेदौ । जातिः – मालती । छलः - आग्रहः । वसन्तकाले जातिर्न स्फुरतीति कविसमयः । मधुमास-समृद्धिमिव विजातिम् - इति हि कादम्बरी ।

"इदमित्थ "मित्येव हि सर्वं ज्ञायते ; यथा निर्विशेषचिन्मात्रब्रह्मेति ।

अनुबन्धाः - सहायाः । बन्दीं यथा गृह्णाति, तथा ग्रहीतुमित्यर्थः ।

त्वत्प्रसक्तीति । यतिराजकृतो वेदान्तनिर्वाहः सम्यक् न्यायप्रयुक्तः - इति दर्शयति । अहीरसाः - सेवकाः ।

अनवेक्षितवर्णभेदं - शूद्रादिसवर्णसाधारणमित्यर्थः ।

शारीरकसूत्र - मायावादभाष्ययोः परस्परविरोधं दर्शयति– द्वयमिति ।

सुतर्कः स्तुतिव्याजेन निन्दन्, तत्प्राप्तफलमाह - सामन्तेति । सामन्तस्य भद्रपीठम् । सुनीतिरपि तथैव तदेवार्थमुपबृंहयति–तथागतस्सर्वार्थसिद्ध एवेति । तथागतः - सामन्तभद्रपीठं गतः । सर्वैरर्थैः सिद्धः ।

मायावादस्तु तं ततो निंदार्थं विज्ञायाह – किमहं सुगत इति । सामन्त भद्र - तथागत - सर्वार्थसिद्ध शब्दान् बौद्धविशेषणवाचकान् सुतर्कः पुनरपि स्तुति-व्याजेनाह - सर्वज्ञः किं न वेत्सीति ।

शङ्करस्तत्सर्वं विज्ञाय निवारयति — भगवन्नलमिति । सुतर्कः भगव-च्छब्दस्य बौद्धपरत्वमारोप्य शङ्करं स्तौति—शङ्कर एवमनामन्त्रयन्निति । अत्र

सर्वज्ञशब्दः बौद्धशङ्करवाचकः । उप - समीपे, स्थित्वा, स्वयं धर्ममन्यत्र दधतीत्युपाधयः - जपाकुसुमादयः । विश्वमुषोः - विश्वचोरयोः ।

पराङ्कुशोऽपि कंचिद्विशिष्टाद्वैतमाह; - तत्स्वाभिमताद्वैतं मत्वा सान्त्वयति ।

मुकुन्दाद्वैतं प्रमाणविरुद्धमित्याह - केनादर्शीति । न केनाचिद्दृष्ट इत्यर्थः । अन्यस्तिष्ठतु कः, त्वयैव दृष्टः ? इत्युपालभते । स्वराट् - अकर्मवश्यः ।

पुण्ड्रदेशेषु कश्चिदसुरो, वासुदेवोऽहमिति कृष्णेन स्पर्धां कृतवान्, सुदर्शनेन काशीं दग्ध्वा निहत इति - पुराणे । जितकाशिना - जयशीलेन, सुदर्शनावतारेण यतिराजेन । अन्यत्र, जितकाशीपुरेण चक्रेण ।

उभयोस्साम्यमाह - विज्ञनमानयोरिति ।

रामानुजे - यतिराजे । लब्धासिके - लब्धप्रतिष्ठे । मायाविलासिनी - अविद्येति यावत् । अनासिका - अप्रतिष्ठा । अर्थान्तरं च स्फुरति — रामानुजे - लक्ष्मणे, लब्धासिके - गृहीतखड्गे, मायाविलासिनी - शूर्पणखा; मिथ्यादृक् - राजानमभिकाङ्क्षन्ती, अनासिका - नासिकारहिता; कथं न स्यात् — इति ।

विपक्षेपः - शत्रुशेषः ।

तदङ्गं - व्यकरणशिक्षादि ।

श्लोकस्तु स्वेनैव व्याख्यातः ।

महामन्त्रीश्वरेति - सोल्लुण्ठम् । " निष्कलं निष्क्रियं शान्तम् " इति ब्रह्मविषया अविकारश्रुतिः । " नित्यो नित्यानाम् " इत्यादिः जीवनित्यत्ववादिनी ।

यतिराजो विद्यासम्बन्धनिमित्तं यादवप्रकाशमनुगृह्य, त्रिदण्डादिकं अनुगृहीतवानिति ऐतिह्यम् । तदनुसारयति - रामानुजस्ते शरणमिति ।

तद्विषयवासिभिः - ब्रह्मनिष्ठैः ।

परां कोटिं - उन्नतं पदम् । त्रिदण्डधारणेन मत्समानधर्मा । मिथ्यादृष्टिः - जीवपरैक्यमतिः । शिवैक्यम् - इति । भास्करसंन्यासे अष्टादशयतिलिङ्गानामुपलक्षणम्—

त्रिदण्डादि । सत्योपाधिकृतसत्यभेदवादी । उपाधिः सत्यः । तत्कृतजीवपरोभयभेदः सत्यः - इति भास्करः । तत्पक्षे प्रकृतिविकारान्तःकरणोपाध्यवच्छिन्नं ब्रह्मैव जीवाः । तद्ब्रह्मणो भिन्नत्वात् । अनुपहितं - उपाधिरहितं ब्रह्मैव शान्तं निर्दोषम् । शिवं — सर्वमङ्गलगुणास्पदम् । समप्राधान्ये समुच्चयः ।

चातुर्मास्यान्तर्गतत्वात् नभोमासे संन्यासी क्वचित् तिष्ठति । अंशुकं - किरणम् , वस्त्रं च ।

व्याप्तिः तर्काप्रतिघातिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वं इति तर्काङ्गपञ्चकम् ॥

सुनीतिः—सामान्यविशेषादिन्यायाः । विषयव्यवस्थया - परस्परबाधारहितैः विषयवाक्यैः ।

इति वेदान्तविलासटीकायां

पञ्चमोऽङ्कः समाप्तः

---

## अथ षष्ठोऽङ्कः

निरालम्बनम् — प्रमाणादिसद्भावशून्यमपि । एवं तत्सद्भावसमीचीनशास्त्रमिव गगनचित्रवदिदमपि किञ्चिदिन्द्रजालमिति भावः ।

स्वसामर्थ्यदर्शिनं यतिराजमभिनन्दति — मद्वीपाटवेति । प्रमाणसिद्धं - सत्यम् ; तच्छून्यं - मिथ्या - इति हि तत्त्वस्थितिः । अन्यथा - तद्वैपरीत्येन । इन्द्रजालतुल्यमिदमपि तत्त्वं पश्यन् । बत - खेदे । अद्भुतं - शास्त्रगगनचित्रलेखनतुल्यम् शास्त्रम् । त्वदन्यो न वेत्ति ।

दृष्टासम्भावनीयमपि मन्त्रौषधिबलेन ऐन्द्रजालिकेन दर्शितम् । यथा सरसि, तथा पाषाणेऽपि सम्भवतीति मन्यते चेत्, अस्य कुहनाशिल्पकौशलं नष्टमित्याह - द्रष्टेति । अबुद्धिज्ञातवान् ।

एकम्, यथा मायावादेन वेदमौलेः वेदविचारोपरि विरोध उत्पादितः ; एवमन्यैः प्रभाकरभट्टादिभिः । व्याख्येयवेदराशेरेकशास्त्रत्वात् तद्व्याख्यानमपि एकमेव ; तत्र व्याख्यातृभेदात् वेदविचारः, वेदान्तविचारः - इति शास्त्रभेद उक्तः ; यथा - पाणिनीयसूत्रवृत्तेः । तत्र कर्मपरस्य वेदविचारस्य जैमिनिः सूत्रकृत्; ज्ञानपरस्य वेदान्तस्य व्यासः सूत्रकृत् ; एतदुक्तमेकशास्त्रयोरिति ।

## इति विष्कम्भः

---

यतिराजो भाविदिग्विजयसूचकं निमित्तमाह — दक्षिणतो दर्शनम् - शुकासितेति । राजा तु स्वाभिमतानुरूपं तदर्थं मन्वानः यतिराजं स्तौति - महर्षिप्रियसेवेति । अत्र शुकाद्या महर्षयः - कृष्णपक्षाः - कृष्णे भक्तिमन्तः । कृतोद्योगाः - कृतोत्कृष्टतद्ध्यानाः । सत्पथः - सतां ब्रह्मविदां मार्गः । द्विजाः - ब्राह्मणाः । यतिराजदर्शनम् - यतिराजसिद्धान्तः ।

रामानुजदर्शनमिति व्यपदेशो सुनीतिरेतुमाह - स्वस्वार्थेति ।

अत्रायमभिसन्धिः—उभयमीमांसयोरेकशास्त्रत्वात्, पूर्वमीमांसा त्रैवर्गिकविषया ; उत्तरमीमांसा मुमुक्षुविषया । तत्र याश्च श्रुतयो विरुद्धवत् प्रतिभासन्ते ; तास्तु विषयभेदात् परस्परं न बाधन्ते । उत्तरमीमांसायां च ब्रह्मणो याः, शरीरगुणकर्मादिवादिन्यः श्रुतयः, ताः, नित्य - निरवद्य-कल्याणशरीर - गुण - कर्मादिविषयाः ; याः, तन्निषेधवादिन्यः, ताः, हेयशरीरविषयाः - इति, न तासां परस्परविरोधः ।

प्रत्यक्षादिप्रमाणान्यपि प्रबलप्रमाणान्तराबाधितस्वविषये प्रमूणि भवन्तीति प्रामाणिकं चिदचिदीश्वरात्मकं जगत्सत्यमेवेति ।

राजा "शब्दैकशेषे"त्यादिना द्वितीयाङ्कोक्तं विरोधं स्मरन्नाह - मायावादवाक्यादिति । (१८ पुटे शब्दैकशेष - इत्यादि श्लोके)

यतिराजस्तद्वचनमसदित्याह — विश्वमृगेति । सर्वेश्वर - जगत् - स्वर्गादिस्वीकारेण राजानुवर्तनं हेतुमाह - इतिहासेति ।

राजा शास्त्रैक्यं किं न्याय्यमिति निरूपयेत्याह - सुनीतिमुख्यमिति ।

सुनीतिः तन्न्याय्यमित्याह — मूलमन्त्रीति । मूलमन्त्रं श्रीमदष्टाक्षरम् । प्रधानमन्त्री वा ।

यतिराजः, तत्र वेदान्तोपबृंहणतया सूत्रकृत्प्रणीते महाभारते शास्त्रैक्यमुच्यत इति, भावेनाह - पञ्चमो वेद इति ।

दुष्टमन्त्रिणः —मायावाद — भाट्टप्रभृतयः ।

इतिहासार्थवादप्रमाण्यस्वीकारे हेतुद्वयमाह - मन्त्रेति । मन्त्रब्राह्मणदेवतापरतया, अभिज्ञातया वा अत्यद्भुतैः उक्तैः तद्गुणवर्णनैः — तेषां विध्यङ्गभूतमन्त्रादीनां गुणवर्णनैः । तैलोक्यं तस्मिन् स्वप्रधानभूते विधौ प्रवणयन् - वशीकुर्वन्नयमर्थवादः तत्र प्रभुतया संमतस्य विधेरपि सम्मान्यः । अत्र - अर्थवादे, वैयर्थ्यापादनं विधिवैयर्थ्यापादनमेव पर्यवस्येत् ।

सोऽर्थवादश्चतुर्विधः — (१) निन्दा, (२) प्रशंसा, (३) परकृतिः, (४) पुराकल्पः — इति । " स भूरिति व्याहरत् " इत्यादिर्मन्त्रार्थवादः, " वायुर्वै क्षेपिष्ठे " ति देवता परोऽर्थवादः - इत्युभे - प्रशंसे । " सदेव सोम्य " इत्यादिः पुराकल्पः । ब्राह्मणं — विधिवाक्यम् । ब्राह्मणशेषोऽर्थवादः ।

द्रस्शेऽपि । "सदेव सौम्येदमग्र आसीत्' इत्यादिषु जगत्कारणवाक्येषु विध्यदर्शनेऽपि । अनन्यसुलभैः—प्रमाणान्तरप्राप्तैः । राजानं - वेदमौलिम् । विधिनिर्विशेषम् - अपूर्वार्थप्रतिपादकतया विधिवत् संमाननीयः ; प्रमाणयितव्य इति यावत् । अतार्थवादस्य पूज्यपुरुषलक्षणं च द्रष्टव्यम् । तथा सतीति ।

अर्थवादसिद्धदेवता - तल्लोककिङ्किरे तत्तद्देवतान्तर्यामितया अवस्थितो विष्णुरेव तैस्तैः कर्मभिराराध्यः, तत्तद्देवतामुखेन फलप्रदश्च-इत्याह — ये यजन्तीति ;

आशुमोक्षपदर्शी - ज्ञानोत्पत्तिहेतुभूतकर्मानुष्ठानं विना, स्मरणेनापि सद्यो मोक्षप्रदा भगवदवतारकथा । शुकः — व्यासूसनुः । स्पष्टमन्यत् ।

परदहरविद्येति - ब्रह्मविद्याविशेषाः ।

सहस्रेष्वधिकरणेषु - धर्मनिर्णयस्थानेषु । प्रत्यूहन्तृत्तान्ताः - प्रतिकूलतर्कसिद्धान्ताः । तेषां विजय एव - महाभारः ; तस्य तरणं - निर्वहणम् । अन्यत्र, सहस्राधिकेषु रणेषु ; रामानुजः - कृष्णः ; तन्मतानुसारेणैव स्वप्रतिज्ञातवैदिकप्रविघ्नभृतयमविजयः । विजयस्य, महाभारतयुद्धस्य च निर्वाहकः इत्यर्थः ।

भवदेकार्थः — भवत्प्रयोजनैकपरः । अथातो धर्मजिज्ञासा – इत्युपक्रमात् धर्मपरः ।

चिद्वर्गो — बद्ध - मुक्त - नित्यरूपेण त्रिविधः । अचिद्वर्गो - मूलप्रकृतिः, कालः, शुद्धसत्त्वम् - इति त्रिविधः । तयोरीशः - तदीशः । तल्लीला — ईश्वरस्य लीला जगत्सृष्टिसंहारादि ।

" इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् "; इत्थमाह - उपबृंहिताः - विस्तारिता इति ।

क्षेत्रज्ञाः — जीवाः । वर्तनीं - क्षुद्रमार्गम् । याम्यं - यमलोकमार्गम् । अर्चिरादिः – मार्गः ; अत्र पान्था मुक्ताः ।

[1]अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥

उल्लोचः — वितानम् । राजाज्ञां - सदाचारव्यवहारप्रायश्चित्तानि, इति बुद्ध्वा ।

श्रूयमाणशब्दातिरेकेण तदभिव्यङ्ग्यतया अभिमतस्य स्फोटस्य दुर्निर्वहत्वात् व्याविरिति स्फोट उक्तः । वर्णसमुदायः — पदम् ; तस्य सेवा - शोधनम् । प्रकृतिप्रत्ययानुगुण्येन व्युत्पत्तिः । प्रत्ययो विश्वासश्च ।

सर्वपदार्थोऽपि प्रमितेरेव विषयः । तत्कारणत्वाच्छब्दस्यापि इत्यभिप्रयन्नाह - तत्तत्सखीमेवेति ।

सुमतिविरहे, तत्संयोगे च फलमुत्प्रेक्षते - गच्छन्त्येति ।

पञ्चोपनिषन्मन्त्रप्रतिपाद्य - पञ्चतत्त्वमयतया पञ्चोपनिषन्मयम् ।

1. " नत्वादृर् – अरमाळ् " इति प्रसिद्धानां श्रीमद्वात्स्यवरदमिश्राणामयं श्लोकः ।

इह - परमपदे । त्रिविधानि - नित्यमुक्तपरब्रह्मभेदेन । स्वयं ज्योतींषि - स्वयंप्रकाशानि । प्रत्यञ्चि - प्रत्यगात्मतत्त्वानि । बद्धवर्ग उच्यते - तम इति । तमः - प्रकृतिः, अज्ञानं वा । देहाद्यभिमानेन स्वात्मप्रातिकूल्यानि । तेषां वर्गः । देहद्वारेण प्रतिसञ्चरः ।

मानाधिकः—मानोप्यधिकः । मज्जीवितं च त्वयि - सर्वं त्वदायत्त-मिति यावत् । साक्षान्मोक्षप्रदानं च ज्ञानस्यैव ; तत्कारणत्वात् वेदान्तस्य च ।

चतुर्थाङ्के सुमत्यनुनयसमये "यतिराजेन सह - एवं मन्त्रितं देव"नेति स्ववाक्यसत्यतां स्मारयति - स्मृतिमभिनीयेति ।

प्राधान्यं पतिप्रसादलब्धमित्याह - देवराजमहिषीति ।

लब्धं विशदयति — काल इति । तद्विवशानि – कालविवशानि । तत्कर्माणि - पुण्यपापरूपाणि । महदादिरूपेण जगद्रूपिणी । अजडं - स्वसत्तायां स्वेनैव भासमानम् ।

"स्वसत्ताभासकं सत्त्वम्, गुणसत्त्वाद्विलक्षण" मिति कथितं शुद्धसत्त्वमेतत् । मूलप्रकृतिकालौ हि जडौ, स्वसत्तायां ज्ञानेनैव प्रकाश्यत्वात् । श्यामल मित्यनेन दिव्यमङ्गलविग्रहयोग उक्तः । सपीतिः — सहपानम् । समानभोगा इत्यर्थः । "भोगमात्रसाम्यलिङ्गात्", "निरञ्जनः परमं साम्यमुपै" तीति सूत्रात्, श्रुतेश्च ।

ते नित्यमुक्ताः स्वानुरागं सन्धुक्षयन्ति - किं मामिति ।

राजा स्वानुरागातिशयं दर्शयति - अस्मत्केळीति । रहस्यबन्धुः । "दुःखा-ज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः" इति, तद्विलक्षणस्वरूपाविर्भावलक्षणं मोक्ष-स्वरूपमित्याह - अमलामिति । अनादिप्रकृतिसम्बन्धविरहिता मुक्ताः । तेषामेकया आवल्या उपशोभत इति, आवल्युपशोभितम् । प्रकाशमेव तामनुभवितुमनुरागी, तदुपायभूतयोः उभयोरावयोः परस्परप्रणयातिशयं वाञ्छतीत्याह - रागवृद्धिमिति । तन्निमित्तं सुखं मम करान्नापनेतव्यमिति भावः ।

"ते ये शतम्, ते ये शत"मिति तुल्या – तारतम्येन । अवधृतं—निश्चित-

मिति भावः । तदेव वैषम्यमाह-**परब्रह्मेति** । **विमलेति** हेयप्रत्यनीकत्वमुक्तम् । **सुख-संविदिति** - कल्याणैकतानत्वम् । "ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पते-रानन्दः" । अत्र बृहस्पतिः - पशुपतिः, - "बार्हताः पशवः" इति श्रुतेः । बृहतां - इन्द्रादीनां पतिरिति वा ; इन्द्रपुरोहितस्य तदधिकतरैश्वर्यानुपपत्तेः ।

अन्यथा भूतप्रामाणिकात्मार्थानामङ्गीकारे दोषान्तरमाह—**भूतैरि**ति । तन्मयम्—पृथिव्यादिभूतमयम् । भूतैः — अन्नपानादिरूपैः देहेन्द्रियादिविलक्षणैः । **स्वात्मनि** ।

**अयमपि कश्चिदिति** — प्रारब्धवाक्यार्थशेषं पूरयति — **अपरस्त्विति** । कृत्स्नवेदान्तविषयभूतं "ब्रह्मविदाप्नोति परम्" इति वाक्यान्वितब्राह्मणार्थमाह - **ध्यायन्निति** । अजडं - ज्ञानरूपम् । "सत्यं ज्ञानमनन्तं ब्रह्म", "यो वेद" इत्यादिकं वा । तत्र, अनन्तपदेन नारायण इति, व्यक्तम् । तदुच्यते । स एव हि त्रिविधपरिच्छेदरहितत्वात् अनन्तः प्रसिद्धः । "हार्दानुगृहीतः शताधिकया ना"ड्येति सूत्रम् । "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतिं च स्मारयति - **निष्क्रम्येति** । **माया** - मलं कर्मवासना । **स्वयं चित्** - ज्ञानैकमयः । **स्वराट्** - अकर्मवश्यत्वात् स्वतन्त्रः । परमात्मपारतन्त्र्यमपि मुक्तस्य सङ्कल्पायत्तमिति न स्वातन्त्र्यविरोधमावहति । **विपश्चिता** - सर्वज्ञेन ।

मूलमन्त्रार्थविदेव तद्विवरणरूपवेदार्थं वेत्तीत्याह - **मूलमन्त्रेति** ।

भगवतो लीला — तदविधेयानात्मन, कुलटया स्त्रीपुरुषादिविकृतिमत्या प्रकृत्या संयोज्य, तद्वश्यतया तन्मयानामात्मनां परस्परप्रणयपरिहासैरीश्वरं स्ववशयति; तथापि, स दयावश्यो देवः—परिश्रान्तानात्मनो विलोक्य लीलामवधूय रक्षितुं समर्थोऽपि, केवलं हेतुपरायां लीलायां दाक्षिण्यादेव स्वाभिमुख्यलक्षणं यत्किञ्चित्सुकृतमिति व्यपदिश्य, प्राप्तुः पुरुषस्य त्रिगुणं निगलं छिनत्तीत्याह — **प्रगल्भेति** ।

उक्तमुपलालयति — **क्रीडन्निति** । स्पष्टमन्यत् ।

यतिराजस्य अध्यवसायवैभवं विलोक्य तस्याश्रमधर्मभूतं सर्वाभयप्रदानं मोक्ष-दानपर्यवसायि स्यादिति निश्चिनोति — **कर्मव्याजेति** ।

स्वसत्तायां परप्रकाश्यं जडम्; स्वेनैव प्रकाशमानमजडम्। जडं - पृथिव्यादि। अजडं - आत्मवस्तु। प्रलयकाले पृथिव्यादिकं तु सूक्ष्मप्रकृत्यवस्थं भवति। आत्मा तु देवादिशरीरविलयेन भेदानर्हस्वरूपेण अवतिष्ठते। तदुभयम्, परमात्मशरीरतया तस्मिन् प्रलीयते। सद्भावशेषः — तदुभयशरीरः परमात्मा, सृष्टिकाले स्वेच्छया "बहु स्या" मिति संकल्पयति। तदिदमुक्तं **सत्ताशेषेति**।

तत्र बहुभवनसंकल्पविशिष्टवेषेण निमित्तकारणम्, सूक्ष्मचिदचिद्विशिष्टवेषेण उपादानकारणं च ब्रह्मैव भवति। बहुप्रकारित्वेऽपि प्रकारगताः सर्वे दोषाः प्रकारि ब्रह्म न स्पृशन्ति; यथा शरीरगता बाल्ययौवनाद्यवस्थाः शरीरिणमात्मानम्। तदुक्तं — **न तद्दोषेणेति**।

तत्तद्घटादिपदार्थशब्दानां, धियां च, तत्तत्पदार्थविशेष्ये परमात्मनि विश्रान्तिर्भवति; यथा, देवमनुष्यादिशब्दा देवादिशरीरविशेष्ये आत्मनि विश्राम्यन्ति। यथावा, शुक्लपट इत्यत्र शुक्लपदं तद्विशेष्ये पटे; देवादिभूतपदार्थानामाश्रयभूतात्माद्यपृथक्सिद्धत्वात्। तदुक्तं — **तत्तच्छब्दधियामिति**।

अयमेव सर्वश्रुतीनां अकुतोभयः पन्थाः। तथा हि — "क्षरं प्रधानममृताक्षरं हरः; क्षरात्मानावीशते देव एकः", "भोक्ता भोग्यं प्रेरितारं च मत्वा जुष्टस्ततस्तेन अमृतत्वमेति" इत्यादि भेदश्रुतीनां प्रधान - पुरुष - ईश्वराणां स्वीकारादविरोधः। "सर्वं खल्विदं ब्रह्म" इत्याद्यभेदश्रुतेः सर्वस्य ब्रह्मात्मकत्वस्वीकारात्, ऐक्यश्रुतीनामर्थवत्त्वम्। "यस्यात्मा शरीरं, यस्य पृथिवी शरीरम्" इति शरीरात्मभावेन तदैक्यमिति श्रुत्यर्थस्वीकारेण **येन सुपथेत्युक्तम्**। सुपथेत्यनेन — "ब्रह्म एकमेव सत्यम्, अन्यन्मिथ्येति पक्षस्य, पक्षान्तराणां च दोष सूचितः।

जीवस्वरूपं शोधयति — **देहाक्षादीति**। अक्षम् — इन्द्रियम्। आदिशब्देन आत्मनः प्राणसंविदां संग्रहः। तदुक्तम्[1] —

देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतस्सुखी ॥ इति।

---

1. सिद्धित्रये, चित्प्रकरणे।

अणुः - "एषोऽणुरात्मा चेतसा वेदितव्यः" इति श्रुतेः । अजडः - अनन्याधीनप्रकाशः ज्ञानस्वरूपः । नित्यः - सर्वकालसम्बन्धी । अहमर्थः - अहमिति ज्ञानशब्दयोरनारोपितो विषयः । अतएव प्रत्यक् । अतन्मय इव - अज्ञानदुःखमलरूप इव, प्रकृतिधर्माध्यासात् यो भ्राम्यति । तमो - मोह - महामोह - तामिस्र - अन्धतामिस्राः - पञ्चक्लेशाः । भेदस्तमसोऽष्टविधः, मोहस्य च । दशविधो महामोहः । तामिस्रोऽष्टादशधा ; तथा भवति अन्धतामिस्र इति, तद्भेदाः सांख्ये द्रष्टव्याः । त एव तम आदयः — अविद्याऽस्मितारागद्वेषा इत्युच्यन्ते । जात्यायुर्भोगाः - त्रिपाकाः । तापत्रयविनाशो - निर्वाणम् । निरतिशयानन्दानुभूतिर्वा ।

मातापितृसहस्रेभ्यो वत्सलतरं शास्त्रमित्याह — निसर्गेति ।

तद्गुरोरपि समानमिति आह — अन्योन्यमिति ।

सर्वेश्वरादपि गुरोरतिशयमाह — सर्वज्ञ इति ।

शुभनिमित्तमाह — वाताः केऽपीति ।

शैव - पाशुपत - कापाल - कालमुखा इति, चत्वारः शैवाः । सौत्रान्तिक - वैभाषिक - योगाचार - माध्यमिका इति, शाक्याश्चत्वारः । आसिका - प्रतिष्ठा । तच्छेदोऽप्रतिष्ठा ।

एतेन तर्कस्य बुद्धिमदपेक्षया प्रतिष्ठाराहित्यमुक्तम् । "तर्काप्रतिष्ठाना" दिति सूत्रम् । बुद्धिबलान्नासिकाविच्छेदोऽपि स्फुरति । श्रुतिः — वेदः, श्रोत्रं च । दर्शनं - शास्त्रं, आलोचनं च । अवैदिकं शास्त्रं त्याज्यमिति भावः ।

यथाधिकारं - भक्तिः, प्रपत्तिश्च ।

भक्तिप्रपत्तिनिष्ठयोरुभयोरपि मुक्तिं दर्शयति - गुणपञ्जरेति । शुकोऽपि प्रपत्तिनिष्ठः । गृणन् कृष्णेति भक्तिनिष्ठः ; नामसंकीर्तनस्य नवविधभक्त्यन्तर्भावात् । अत्र पक्षिसमाधिश्च व्यज्यते ।

वेदान्तविषये मुक्तानां कृतज्ञतामाह — स्तुवन्तीति ।

**तदर्थविचार इति**। श्रीभाष्यविषयः कश्चिद् ग्रन्थः सुदर्शनेन कृतः। कोशः - शास्त्रसंपुटिका, अर्थशाला च। वत्सकुलं - गोत्रं, तर्णकसमूहश्च। रामानुजः - कृष्णश्च।

स्व - भक्तयोः प्रतिज्ञयोः भक्तप्रतिज्ञां प्रतिपालयन्, स्वप्रतिज्ञां विहाय शस्त्रं गृहीतवान् इत्याह - भीष्मेति।

प्रकृतिस्वरूपमाह — **तमो यदिति**। अस्मात् तमसस्त्रिगुणात्मको महान्; तस्मात् त्रिविधोऽहङ्कारश्च असीत्। **बहुविधम्** – चक्षुरादिज्ञानेन्द्रियाणि पञ्च, वागादिकर्मेन्द्रियाणि पञ्च, मनश्च, शब्दादितन्मात्राणि च पञ्चेति, षोडशविधम्। ततस्तेषु पञ्चभ्यः - तामसाहङ्कारेभ्यः तन्मात्रेभ्यः। **परिकरः** – उपकरणम्।

आक्षेपमुखेन भगवतस्तर्कापरिच्छेद्यत्वमाह — **विभुश्चेदिति**।

अणुषु - जीवेषु अन्तरवस्थानं अंशेन वा, कात्स्न्येन वा। पूर्वत्र सांशत्वेन अनित्यत्वप्रसङ्गः। उत्तरत्र अल्पपरिमाणे महत्परिमाणान्तर्भावानुपपत्तिः। न हि सर्षपे शैलान्तर्भावः। कात्स्न्येन एकवृत्तौ च, अन्यत्र पदार्थे वृत्तिर्न स्यात्।

अथाणुपरिमाणो भगवान्; तर्हि, कथं विश्वव्याप्तिः स्यात्; न हि अल्पपरिमाणः, एकत्र सन्, अन्यत्रापि भवति; घटादिषु अतद्दृष्टेः।

अथ परिमाणद्वयवान्; नैतदुपपन्नम्; एकस्य विरुद्धाकारद्वयानुपपत्तेः। न हि एक एव शुक्लो नीलश्च।

तर्हि तस्य द्वयमपि नास्तीति चेत्, द्रव्यस्य सतस्तस्य परिमाणद्वयाभावेन द्रव्यता न स्यात्। नह्यद्रव्यं भगवान्, सर्वज्ञादिगुणाधारत्वात्; अतस्त्वां "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतिः कथं निरणैषीत्।

परिहारस्तु — जातिरपि व्यक्तिषु वर्तमाना प्रतिव्यक्ति निरंशत्वात् परिसमाप्य वर्तते। एवं सर्वशक्तिः ईश्वरो वर्तताम्। किं च, शास्त्रैकसमधिगम्येऽर्थे प्रत्यक्षादि, स्वाविषयत्वात् साधनबाधनक्षमं न भवति। तत्र शास्त्रमेव प्रमाणम्। तच्च – "यच्च किंचित्", "य आत्मनि" इत्यादि। न हि वचनविरोधे न्यायश्च प्रभवति।

**चिरन्तनवचो** - वेदः । अत्र, परत्व - सौलभ्ये उक्ते ।

भोगमोक्षानुभूति — तदुपायौ च त्वमेवेति स्तौति — **साम्राज्येनि** ।

अत्र, दर्शनं - शास्त्रम् ; शुभं दर्शनं यस्येति "सुदर्शन" इति; तदवतारश्च यतिराजः ।

**मानार्थानाम्** — प्रमाणप्रमेयानाम् । **सत्त्रैः** - एकमात्रैः । मानार्थैस्त्रैश्च । **सम्राट्** - स्वाधीनसकलार्थः । तत्र हेतुमाह **अयथावाद** इति । **क्वचिदिति** । मन्त्रार्थवादादिरूपेषु सर्वेषु वेदार्थेषु परमार्थतः प्रामाण्याभ्युपगमादिति भावः । **मन्त्रित्वम्** — अर्थनिर्वाहकत्वम् ।

इति, यत्किञ्चिदस्माभिरुपात्तम् ; अन्यच्च सर्वमध्यात्मनाटकतत्त्वविद्भिः स्वय मूहनीयम् ॥

इति, श्रीयतिराजविजय — अपरनामधेयस्य श्री वेदान्तविलासनाटकस्य टीकायां

रत्नदीपिकाख्यायां

षष्ठोऽङ्कः समाप्तः

---

ग्रन्थश्च परिसमाप्तः



॥ श्रीरस्तु ॥

# अनुबन्धः २

## यतिराजविजयनाटकस्य

## श्लोकानुक्रमणिका ।



श्रीरस्तु

## व्याख्यानादुपलब्धाः पाठभेदाः

| पृष्ठं | पंक्तिः | मुद्रितपाठः | पाठान्तरम् |
|---|---|---|---|
| १ | ३ | वचो निशम्य | वचोऽनुमाष्य, वचोऽनुभाष्य |
| १ | ४ | वः | नः |
| १ | ५ | कूल इत्यादिकोऽत्राधिकः श्लोको वर्तते; स च श्लोको यत्र कुत्रापि मूले नोपलब्धः। | |
| १ | ८ | स्तोमोऽवतंसो | स्तोमावतंसो |
| १ | १० | तृतीयोऽयं श्लोको नास्ति व्याख्याने। | |
| २ | १२ | मारिष | विद्वन् |
| १५ | १० | जनानाम् | द्विजानाम् |
| २० | १३ | महाराजम् | राजानम् |
| २२ | ९ | स्तनमण्डलैः | स्तनमन्थरैः |

| पृ० | पंक्तिः | मुद्रितपाठः | पाठान्तरम् |
|---|---|---|---|
| २३ | ६ | धंमिळ्ळेणव | धम्मिळ्ळेमिअ |
| २३ | १५ | भेददर्शन | विपक्षदर्शन |
| २६ | २० | कुहनजन | कुहनकुल |
| ३२ | १८ | तथा खलु | या खलु |
| ३५ | ६ | तटारण्यानि | महारण्यानि |
| ४२ | ३ | तच्च ब्रह्म | सच्चिद्ब्रह्म |
| ५० | ५ | किमाकुला भवामि | किमहमाकुलास्मि |
| ५३ | ११ | खण्डनहेतुभिः | खण्डनयुक्तिभिः |
| ,, | ,, | दृष्टः | घृष्टः |
| ५४ | १२ | जगच्छीतयोः | जगच्छीतलौ |
| ६२ | २० | द्वीपप्रदीव्यत् | द्वीपप्रदीपः |
| ६४ | १५ | प्रेक्षादरः | प्रेक्षातुरः |
| ६९ | १८ | साभिसराः | साहीरसाः |
| ६९ | २४ | अनपेक्षित | अनवेक्षित |
| ७१ | २० | चिन्मात्र | विज्ञान |
| ७३ | १६ | मन्त्रीश्वर | महामन्त्रीश्वर |
| ७८ | १७ | कृतालापाः | कृतोद्योगाः |
| ८६ | १ | रागवृत्तिम् | रागवृद्धिम् |
| ९५ | २० | मूर्धसु | मूर्धनि |



॥ श्रीरस्तु ॥

# अनुबन्धः ३

## नाटकलक्षणसंग्रहः



चतुर्विधैरभिनयैः सात्त्विकाङ्गिकपूर्वकैः ।
धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रयम् ॥

अभिव्यञ्जन् विभावानुभावादीन् नाटकाश्रयान् ।

उत्पादयन् सहृदये रसज्ञानं निरन्तरम् ।
अनुकर्तृस्थितो योऽर्थः, अभिनयस्सोऽभिधीयते ॥

आङ्गिको वाचिकश्चैव सात्त्विकाहार्यकाविति ।
स चतुर्धा कृतस्तज्ज्ञैः, आङ्गिकोऽङ्गक्रियोच्यते ॥

रागानुषङ्गि यद्वाक्यं नाट्ये तत् वाचिकं स्मृतम् ।
सत्त्वक्रिया सात्त्विकस्स्यात्, आहार्यो भूषणादिकम् ॥

(संगीतचूडामणौ - प्रतापरुद्रीये च)

भावाश्रयं तु नृत्यं स्यात् नृत्तं ताललयान्वितम् ।
आद्यं पदार्थाभिनयो मार्गो, देशी तथा परम् ॥

मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ।
लास्यताण्डवरूपेण नाटकाद्युपकारकम् ॥

(दशरूपके)

रसविषयं सात्त्विकबहुलं नाट्यम्, भावविषयमाङ्गिकबहुलं मार्गापरपर्यायं नृत्यम्, ताल - लय-उभयाश्रयं देश्यपरपर्यायं नृत्तमिति विवेकः । गीतादिपरिणामावच्छेदः कालविशेषः चञ्चत्पुटादिः ; तालान्तरालवर्ती कालः,— लयनालयः ।

अवस्थानुकृतिर्नाट्यं, रूपं दृश्यतयोच्यते ।
रूपकं तत्समारोपात्, दशधैव रसाश्रयम् ॥

काव्योपनिबद्धानां धीरोदात्तादीनां नायकानां अवस्थानुकारः चतुर्विधैरभिनयै-स्तादात्म्यापत्तिः—नाट्यम् । तदेव नाट्यं दृश्यमानतया रूपमित्युच्यते, नीलादि-रूपवत् । नटे रामाद्यवस्थारोपेण वर्तमानत्वात्—रूपकम् । रसानाश्रित्य वर्तमानं तदिदं रूपकं नाटकादिप्रभेदात् दशधा भिद्यते । वस्तु—नेतृ-रसास्तेषां भेदका भवन्ति ।

तत्र नाटकलक्षणमुक्तम्—

साङ्गैर्मुखप्रतिमुखगर्भमर्शोपसंहृतैः ।
पूर्वं प्रकृतिरन्येषां आधिकारिकवृत्तिवत् ॥

वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते ।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥ इति प्रतापरुद्रीये ।

नाटकादौ विघ्ननिवारणार्थं पूर्वरङ्गः कर्तव्यः । तस्य प्रत्याहारादीनि द्वाविंश-त्यङ्गानि । तन्मध्ये चावश्यं कर्तव्या नान्दी ।

नान्दीलक्षणमपि—

अर्थतश्शब्दतो वापि मनाक्काव्यार्थसूचनम् ।

यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ।
द्वाविंशत्या पदैर्वापि सा नान्दी परिकीर्तिता ॥ इति तत्रैवोक्तम् ।

नान्द्यनन्तरं च प्रविष्टेन सूत्रधारेण रङ्गप्रसाधनपुरस्सरं भारतीवृत्त्याश्रयणेन श्लोकैः काव्यार्थः सूचनीयः । तथोक्तं दशरूपके —

रङ्गं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ इति ।

भारतीवृत्तिर्नाम — पुरुषविशेषप्रयोज्यः संस्कृतबहुलो वाक्प्रधानो नटाश्रयो व्यापारः । (१) प्ररोचना (२) वीथी (३) प्रहसनं (४) आमुखं च तदङ्गानि । तत्र, प्रस्तुतार्थप्रशंसनेन श्रोतॄणां प्रवृत्त्युन्मुखीकरणम् प्ररोचना । आमुखम् — प्रस्तावना ।

एतत्सर्वमुक्तं दशरूपके—

भारती संस्कृतप्रायो वग्व्यापारो नटाश्रयः ।
भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ।
उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना ।
वीथी प्रहसनं चापि स्वप्रसङ्गेऽभिधास्यते ।
वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्र स्वभावतः ।
सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥

प्रस्तावना वा, तत्र स्युः कथोद्धातः प्रवृत्तकम् ।
प्रयोगातिशयश्चाथ वीथ्यङ्गानि त्रयोदश ॥

तत्र कथोद्धातः—

स्वेतिवृत्तसमं वाक्यं अर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत् पात्रं कथोद्धातो द्विधैव सः ॥

अथ प्रवृत्तकम्—

कालसाम्यसमाक्षिप्तप्रवेशः स्यात् प्रवृत्तकम् ।

अथ प्रयोगातिशयः—

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥

अथ वीथ्यङ्गानि—

उद्धात्यकावलगिते प्रपञ्चत्रिगते छलम् ।
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ — इति ॥

एषामन्यतमेनार्थं पात्रं चाक्षिप्य सूत्रभृत् ।
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥

तत्र —

अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान् ।
कीर्तिकामो महोत्साहः त्रय्यास्त्राता महीपतिः ॥

प्रख्यातवंशो राजर्षिः दिव्यो वा यत्र नायकः ।
तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ॥

यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥

आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभज्य च ।
खण्डशः सन्धिसंज्ञांश्च विभागानपि खण्डयेत् ॥

तत्रैवं विभक्ते—

आदौ विष्कम्भकं कुर्यात्, अङ्कं वा कार्ययुक्तितः ।
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ।
यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ।

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः ॥

स च — (अङ्कलक्षणम्)

प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥

तत्र च —

अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः ।
गृहीतमुक्तैः कर्तव्यं अङ्गिनः परिपोषणम् ॥

न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्यात् वस्त्वलङ्कारलक्षणैः ॥

एको रसोऽङ्गीकर्तव्यः वीरः श‍ृङ्गार एव वा ।
अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।

संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ।
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥

नाधिकारिवधं क्वापि त्याज्यमावश्यकं न च ।

एकाहचरितैकार्थमित्थमासन्ननायकम् ।
पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥

पताकास्थानकान्यत्र बिन्दुरन्ते च बीजवत् ।

एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ।
पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम् ॥

इति चान्ये विशेषा अन्यतो ज्ञेयाः ॥

## सन्धिपञ्चकनिरूपणम्

सन्धिर्नाम — एकेन प्रयोजनेन अन्वितानां कथानामवान्तरप्रयोजनसम्बन्धः । ते च सन्धयः पञ्च । तत्र आरम्भबीजसम्बन्धो मुखसन्धिः ; प्रयत्नबिन्दुसम्बन्धः प्रतिमुखसन्धिः ; प्राप्त्याशापताकयोस्सम्बन्धो गर्भसन्धिः ; नियताप्तिप्रकर्यो: सम्बन्धो विमर्शसन्धिः ; फलागमकार्ययोस्सम्बन्धो निर्वहणसन्धिः ।

तत्र, पञ्चावस्थाः—

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ।

प्रयत्नस्तु फलप्राप्तौ व्यापारोऽतित्वरान्वितः ।

उपायापायशङ्काभ्यां प्राप्त्याशा कार्यसम्भवः ।

अपायाभावतः कार्यनिश्चयो नियताप्तिका ।

समग्रफलसम्पत्तिः फलागम उदाहृतः ॥

पञ्च अर्थप्रकृतयः—

स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकथा ।
अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥

प्रतिपाद्यकथाङ्गं स्यात् पताका व्यापिनी कथा ।
अव्यापिनी प्रकरिका, कार्यं निर्वाहकृत्फले ॥

तत्र च —

(१) मुखं बीजसमुत्पत्तिः नानार्थरससम्भवा ।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥

(२) लक्ष्यलक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् ।
बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥

(३) गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
अस्याप्त्याशापताकानुगुण्येनाङ्गोपकल्पनम् ॥

(४) गर्भसन्धौ प्रसिद्धस्य बीजार्थस्यावमर्शनम् ।

हेतुना येन केनापि विमर्शः सन्धिरिष्यते ।
नियताप्तिप्रकर्युक्तेरङ्गान्यत्र त्रयोदश ॥

(५) बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥

फलाप्तिकार्यानुगुण्यादङ्गान्यस्य चतुर्दश ॥ इति ॥

वस्तु—सूच्यम्, असूच्यं चेति द्विधा । सूच्यं च पञ्चभिः प्रकारैः ।

यथा—

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भ - चूलिका - अङ्कास्य - अङ्कावतार -प्रवेशकैः ॥

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥

एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः ।
तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ॥

प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ।
अन्तर्यवनिकासंस्थैः चूलिकार्थस्य सूचना ॥

अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।
अङ्कावतारस्त्वङ्कान्ते पात्राङ्कस्याविभागतः ॥

एभिः संसूचयेत् सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ॥ इति ॥
विस्तरस्तु दशरूपकादौ द्रष्टव्यः ॥

---

॥ श्रीरस्तु ॥

# अनुबन्धः ४

## नाटकलक्षणानामत्र समन्वयः

### नान्द्या काव्यार्थसूचनम्

**प्रथमश्लोकेन**—राधया सह सुप्तस्सन् श्रीकृष्णः, श्रीभूनीलादेवीरुत्स्वप्नायितवान् । तन्निशम्य राधया निर्भर्त्सितः, स रसिकावतंसः क्रीडाविटः श्रीकृष्णः तत्परमेव तद्व्यपदिशन् तां तोषयामास—इति विशिष्टोऽर्थः प्रतिपाद्यते । अनेन — मायावादेन पित्रा समर्पितायां सकललोकसम्मोहनचतुरायां मायाविलासिन्यां नितान्तं बद्धानुरागो राजा वेदमौळिः, यतिराजस्य समीपे "मन्दस्मितं च नयनम्" (२-२५) इत्यादिना उत्स्वप्नायितवान् । यतिराजेन संदर्शितसूत्रमार्गानुसारिण्या सुनीत्या निर्भर्त्सितः, स्वचरितनाटकावलोकनेन च मिथ्यादृष्टिदुश्चेष्टासु संप्रवृद्धजुगुप्साकः "आजिघ्रन् मुखपुण्डरीकम्" (४-१३) इत्यादिना सुमतिविषये तमनुरागं प्रकटयति – इति नाटकस्य प्रकृतः कथांशः सम्यग् व्यज्यते ।

**द्वितीयेन श्लोकेन**—चक्षुःश्रवसामधिपतिरादिशेषः—शय्या, वेदात्मा विहगेश्वरो – वाहनम्, सर्वाणि जगन्ति – लीलाविभूतिः, कालकलनामूलभूतौ चन्द्रादित्यौ – लोचने, निखिलजगद्रक्षणजागरूकता – निद्रा, नित्यनिर्दुष्टो निगमस्तोमः – अवतंसोत्पलम् च यस्य, स देवः रङ्गमङ्गळनिधिः श्रेयांसि भूयांसि पुष्णातु – इति वाच्यार्थः – मङ्गलाशंसनम् । अनेन — निखिलजगदुदयविभवलयलीलस्य सूर्यचन्द्रनेत्रस्य निखिलवेदवेदान्तप्रतिपाद्यस्य पर - व्यूह - विभव - अन्तर्यामि - अर्चारूपेण पञ्चधा अवस्थितस्य अप्राकृतदिव्यमङ्गलविग्रहस्य रङ्गमङ्गलनिधेः श्रीमतो भगवतः परमपुरुषस्य अघटितघटनासामर्थ्यरूपदिव्यप्रसूनपरिमलोल्लासको वेदमौलिराप्तसचिवः; तदनुग्रहसम्पादिका च सुमतिस्तदनन्यार्हा — इति च व्यज्यते । किंच, अनन्तगरुडविष्वक्सेनादिनित्यमुक्तपरिषण्णिषेव्यमाणचरणनलिनस्य परमस्य पुंसः कर्णभूषणस्थानीयोऽयं वेदान्त इति च ध्वन्यते ।

**तृतीयेन श्लोकेन** — शिष्टपरित्राणाय, दुष्टशिक्षणाय, धर्मसंस्थापनाय च दशावतारधारी मधुकैटभमर्दनो देवः, वेदान्तं कुदृष्टिकुहनामुखतो संरक्षतीति व्यज्यते । अतो नान्द्या मनाक् काव्यार्थः संसूच्यत इति सर्वं समञ्जसम् ॥

नांद्यनन्तरमागतेन पूर्वसदृशेन सूत्रधारेण च "भास्वानेष" इति श्लोकेन, 'श्रीमतो यतिराजस्य महौदार्यं, सर्वप्राणिहितङ्करत्वं, दयाद्रहृदयता' चेति, अनेके दिव्यकल्याणगुणा व्यज्यन्ते । उत्तरत्र च यतिराजः स्वयमेव अभिधत्ते — "वासो मुक्तपटच्चराणि" इति श्लोकेन स्वस्य आत्यन्तिकं वैराग्यं, वेदमौलिसचिवत्वे च चिन्तादन्तुरितमानसत्वमपि स्वस्य प्रकटय्य, "यद्यहमात्मारामस्य मे किमेभिर्मनोव्याक्षेपैः" इत्यारभ्य, "तस्मादनेकजीवलोकसन्तापात् एकसन्तापो वरमित्यसदुद्योग एव श्रेयान्" इति ग्रन्थसन्दर्भेण मुक्तकण्ठम् ।

"अत्र चतुर्विंशतिपदैः — चतुर्विंशतिप्राकृततत्त्वानि, षड्भिर्वाक्यैः बद्ध - मुक्त - नित्याः, परमव्योमकालसर्वेश्वराश्च वेदान्तवेद्याः सूच्यन्ते । अत्र समवाक्यत्वेन नान्दीलक्षणं च सिद्धम् । रङ्गमङ्गलनिधिरिति रङ्गप्रसाधनं च कृतं भवति" इति व्याख्यायां नाटकलक्षणसमन्वयप्रकारः प्रदर्श्यते ।

सूत्रधारः - मारिष प्रस्तुताक्षेपि स्वकार्यं ब्रूत इति, प्रस्तावनालक्षणमन्वितं भवति । तत्र "उपकर्तुः" इति श्लोके, आत्मविद्या — अध्यात्मविद्या, भरतमुख्या मुनयः—ब्रह्मविदश्शुकादयः, आत्मलाभः—जीवपरमात्मलाभः—इत्यादयो वेदान्तोपयिका विषयाः सूच्यन्ते ।

प्रज्ञाशोधनाय "चित्रकू"टेति प्रहेलिकामुक्तवान् । रसो—ब्रह्म, "रसो वै सः" इति श्रुतेः । भावाः — चिदचित्पदार्थाः । वेदमौलिः—वेदान्तो नायकः । स्थायिभावाः — स्थावरजङ्गमाः । तेष्वन्तर्यामितया अवताररूपेण वा विहरति । मुक्ताः—अनादिसंसारबन्धरहिताः । "सोऽश्नुते सर्वान् कामान्", "कामरूप्यनुसञ्चरन्" इत्यादिषु श्रुतिषु, "भोगमात्रसाम्यलिङ्गा" दिति सूत्रेषु, च मुक्तस्य कल्याणगुणग्राहिभिः । तज्ज्ञैः—मुक्तिस्वरूपज्ञैः ।

अप्राकृते—वेदान्तविषयतया प्राकृतलोकातिवर्तिनि । "तत्र नाटकधर्मं पुरस्कृत्य वेदान्तार्थो व्यङ्ग्यः । तस्यैव प्राधान्यादिदं काव्यं ध्वनिः । इति व्याख्यायामुच्यते ।

"वकुलाभिराम" शब्देन तत्प्रबन्धो लक्ष्यते । श्रुतिः — वेदसारः, शुकमुखाः—ब्रह्मविदः । हरिरेव तत्त्वम्—हरितत्त्वम् । तत्त्वान्तराणां हरितत्त्वविशेषणत्वात् । उच्चैः—सर्वस्मात् परम् । शाखाकोटिषु—काण्वमाध्यन्दिनाद्युपनिषत्सु । महानागमसमूहः ॥

तीर्थीकृत्य — शास्त्रीकृत्य । माधवः - विष्णुः, सुरभयः - सारवन्तः, समयः-सिद्धान्तः । सुमनसः - विद्वांसः । प्रबन्धाः - ग्रन्थाः । श्रुतिसुखपरैः— पूर्वाचार्यैः । पुष्टाः - पोषिताः । षट्पदालापाः - शरणागतिमन्त्राः । सुदृशाम् - सुधियाम् ।

"प्रपञ्चं निह्नुवानमन्धकारम् — इत्यन्वयः । अनेन काव्यार्थः सूच्यते । तमेव विवृणोति – सर्वैरिति – बौद्धादिसमयैः । अद्वितीयम् – असदृशम् । विशिष्टाद्वैतमिति वा" इति व्याख्यायां प्रतिपाद्यते ।

"शास्त्राणामधिदेवताश्च" इति श्लोकेन भारतीवृत्तेरङ्गं प्ररोचना— प्रशंसात उन्मुखीकरणम्, निरूपितम् । "सरलवकुलाभिराम" इति श्लोकेन रङ्गप्रसाधनं कृतं भवति । "सुरभिसुमनःप्रबन्धाः" इति श्लोकेन वसंततुवर्णनमपि कृतम् ।

"सर्वैर्विलुप्तविषयः" इति श्लोकं स्वेतिवृत्तसमं सूत्रधारस्य गृहीत्वा, पात्रस्य नारदस्य प्रवेशात्, अत्र "कथोद्धातः" इति आमुखाङ्गमुक्तम् । गुणवर्णनात् प्रवर्तकमपि भवितुमर्हति ।

एवं प्रस्तावनया मनाक् काव्यार्थः सूचित एव ।

---

## मुखसन्धि — तदङ्गानां समन्वयः

"सर्वैर्विलुप्तविषयः" इत्यादिश्लोके सचिवोत्तमेन यतीश्वरेण अद्वितीयं स्वपदवैभवं सम्प्रापितोऽसौ वेदमौलिः सम्राड् खलु भविष्यति — इति सन्दर्भेण बीजन्यासरूप उपक्षेपः, "निरस्य तिमिरम्" इत्यनेन बीजस्य बहूकरणात् परिकरः, "मायाविमोहित" इत्यनेन बीजस्य स्थापनेन परिनिष्पत्तेः परिन्यासः, "सर्वस्यापि हितम्" इत्यनेन "पौलस्त्येन यथा" इत्यनेन च बीजस्य श्रेयोऽनुबन्धरूपत्वात् विलोभनम् , । "भेदोपजीव्यपि" इत्यनेन सुखदुःखहेतुभूतं विधानम्, "त्रिदण्ड-काषाय" इत्यनेन बीजप्रकाशनात् उद्भेदः, "आत्मारामस्य मे .... वरमित्युद्योग एव श्रेयान्", "तदत्रास्माभिरुद्योगः कार्यः", "महोत्सवो विष्णुपदाश्रितानां मया विधेयो महतां द्विजानाम्" इति च आरम्भः, बीजानुगुणारम्भरूपं करणं च न्यरूपिपाताम् ।

एवं, प्रथमाङ्के — आरम्भबीजसम्बन्धरूपः साङ्गो मुखसन्धिर्निरूपितः ।

## प्रतिमुखसन्धि — तदङ्गानां समन्वयः

"मय्येव राज्यमखिलम्" इति श्लोकेन, विच्छिन्नस्य प्रकृतार्थस्य अवमर्शात्, 'बिन्दु' रुपक्षितः । "साधुचिन्तितममात्येन" इति, "भगवान्! हितमेव कथित-वानसि" इति च, परिजनवचनोत्था प्रीतिः — नर्मद्युतिः निरूपिता ।

एवं द्वितीयाङ्के — प्रतिमुखसन्धिर्निरूपितः ।

## गर्भसन्धि – तदङ्गानां समन्वयः ।

"पञ्चार्थापदवीम्" इति श्लोकेन, "नष्टराज्योऽपि वेदान्तः" इति श्लोकेन च

बीजस्य अन्वेषणात् गर्भसन्धिरुदाहृतः । "संप्रति अमात्यराजभावयोर्विपर्ययोऽस्तु" इत्यनेन 'गण्ड' मुदाहृतम् । "रे वृथा पण्डितंमन्य ! पश्य; एतमात्मानम्" इत्यादिना रोषसम्बन्धवचनरूपं तोटकम् निरूपितम् ।

एवं तृतीयाङ्के गर्भसन्धिर्न्यरूपि ।

## अवमर्शसन्धि—तदङ्गानां समन्वयः

"गीता — (विहस्य) मिथ्यादृष्टिविमोहितस्य न कदाचिदपि तत्सम्भवति; तथापि, यतिराजशिष्याभ्यां प्रविश्य प्रकाशितबहुनीतिविप्लवे" इत्यादिना बीजस्य अवमर्शात् अवमर्शसन्धिर्निरूप्यते ।

प्राभातभोगावली :—

आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥

प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ।
सर्वगो देवशब्दादिरेषा भोगावली मता ॥ इति तल्लक्षणम् ।

एवं, चतुर्थ - पञ्चमाङ्कयोरवमर्शसन्धिर्निरूप्यते ।

## निर्वहणसन्धि — तदङ्गानां समन्वयः

"शुकासितभरद्वाज" इत्यादिना बीजस्योपगमात् निर्वहणसन्धिर्निरूप्यते । "काले वर्षति वासवः" इत्यादिना प्रकृतानुगुण्येन अन्योन्यपरिभाषणात् परिभाषणम् । "महाराजसौभाग्यं कथङ्कारं वर्णयामि" इत्यादिना नरेश्वरपर्युपासनात् प्रसादः ।

"देव! प्रसन्नस्ते भगवान् वासुदेवः" इत्यनेन वाक्यार्थपरिसमाप्तिरूपा संहृतिः; 'मायावी सचिवो निरासि' इत्यनेन वाञ्छितार्थप्राप्तिरूप आनन्दः, 'काले वर्षतु' इत्यनेन शुभाशंसनरूपा प्रशस्तिश्च समुपवर्णिताः ।

एवं षष्ठाङ्के निर्वहणसन्धिर्निरूपितः ।

इति नाटकलक्षणसमन्वये दिक्प्रदर्शिता; अन्यत्सर्वं बुद्धिमद्भिः स्वयमूह्यम् ।

॥ श्रीरस्तु ॥

## अत्र उदाहृतानि सुभाषितानि, लोकोक्तयश्च

भास्वानेष तमो निहन्ति सकलप्रह्लादकारी शशी
किं तावेव फलादिभिश्च तरवः किं नोपकुर्वन्ति नः ।
एवं वस्तु परोपकारि सकलं दृष्ट्वापि नष्टाशयो
यस्स्वार्थैकपरो भवत्ययमहो दृष्टान्तशून्यो जनः ॥ १-४ ॥

सुरनरतिर्यक्स्थावरदेहास्सर्वेऽपि नश्वरा एव ।
तत्क्षणमपि यदि जीवेत् जीवतु देही परोपकारेण ॥ १-६ ॥

शास्त्रेषु शस्त्रपरुषा अपि नाथमार्गे
कर्णामृतानि च भवन्ति कवीन्द्रवाचः ।
दैत्येन्द्रशैलकुलिशं दयितानितम्बं
नाथस्य कोमलमुदाहरणं नखं नः ॥ १-१० ॥

विगुणीकृताऽपि मुग्धैः सदसि गुणग्राहिभिस्तज्ज्ञैः ।
मुक्तावलीव हृद्या सम्यक् सन्धीयते विद्या ॥ १-१५ ॥

अल्पोऽपि रिपुराक्रामन्नसह्यः खलु मानिनाम् ।
नेत्रे परागलेशोऽपि निपतन् कुरुते रुजम् ॥ १-२६ ॥

'प्रकृतिनिर्मले स्फटिकमणौ प्रकृतोपरागः कियच्चिरं तिष्ठति ?' (८. पुटे)

हितस्य करणान्नित्यमहितेभ्यो निवारणात् ।
मातुरप्यधिको बन्धुः प्राप्तो धर्मोऽयमात्मनाम् ॥ १-३८ ॥

'राहुगृहीतो रजनीकरः कथं दृश्यते ?' (११. पुटे)

नापरैः परिभूयन्ते नद्यरण्यं पुमानपि ।
तं विना धीरसत्त्वैस्तैः चिरं परिचिनोति यः ॥ १-४० ॥

प्रायश्च सोदरत एव भयं नृपाणां. दृष्टं च तद्भवति वालिनि रावणे च ॥ २-३ ॥

' न हि कस्यापि रत्नभूतस्य दोषोऽस्ति । ' १९. (पुटे २-३)

चन्द्रदर्शनमात्रेण चन्द्रकान्तशिलाऽपि यत् ।
द्रवीभवति तत्पुंसि स्निह्यति स्त्रीति नाद्भुतम् ॥ २-९ ॥

' गर्दभीवत् स्ववाग्दोषेण हतासि ' (२५ पृष्ठे)

अत्र कथा व्याख्याने (१३ पुटे) विलिख्यते; यथा—

" कश्चिद्रजकः क्षामकाले भक्षणार्थं व्याघ्रचर्मणा समाच्छाद्य गर्दभीं विसृष्टवान् । सा प्रयत्नसंवर्धितान् कलमान् भक्षयन्ती व्याघ्रभयेन मञ्चगतं कम्बलावृतं कलमवाचकं दृष्ट्वा गर्दभशंकया ररास । तदा निर्भयं तां कलमपालो जघान " इति ।

" छायासम्बन्धमपि न सहन्ते हि योषितः " (२७ पुटे)

मतिनीतिविहीनस्य महतोऽपि विनश्यति ।
राज्यमित्यत्र दृष्टान्तो रावणस्य यथा पुरी ॥ २-२७ ॥

" महापुरुषमुखात् प्रमाणवन्त्येव वचांसि निस्सरन्ति " (३२ पुटे)

मिथ्येति विदितैरर्थैर्न किञ्चित् कर्तुमर्हति ।
स्वप्नलब्धसुवर्णेन किं कार्यं कर्णभूषणम् ॥ ३-६ ॥

" न ह्येवमात्मविदामकार्ये मतिरवतरति " (३७ पुटे)

" न हि कण्टकः पादुकामभिन्दन् पादतलमुल्लिखति " (४३, ६२ पुष्ठयोः)

" न हि कश्चिदात्तगन्धं पुष्पमवतंसयति " (४३ पुटे)

" राहुगृहीतः शशी किं तथैव तिष्ठति ? " (४४ पृष्ठे)

" उन्मुखेन शिरःकण्डूयनमेव " (४७ पुटे)

" प्रणयरसपारभूमिः खलु दाम्पत्यम् " (४८ पुटे)

" भर्तैव खलु नारीणां प्रथममाभरणम् " (५७ पुटे)

"कण्ठीरवः पतति किं करियूथयोधी
संघेऽपि सम्मुखनिपातिनि सौरिभाणाम् " ॥ ५-९ ॥

"व्रीहिकोशः स्वात्मानमदग्ध्वा किं गृहं दहति ?" (६५ पृष्ठ)

"आज्ञाभङ्गो नरेन्द्राणां विदुषामुक्तिदूषणम् ।
पृथक्शय्या च नारीणामशस्त्रवध उच्यते" ॥ ५ ११ ॥

"महोरगे निपतन् गरुडः किं मण्डूके निपतति ?
कञ्चुके पातितः खड्गो न स्पृशेत् किं कलेवरम् ?
मतङ्गमेव लक्षीकुर्वन् मृगपतिः महिषे किं निपतति ?" } (६६ पृष्ठ)

"प्रत्येकं सालभेदाय न रामः सन्दधे शरान्" (५-१०)

"स्फटिकः किं प्रदुष्येत वर्णभेदैरुपाधिजैः" (५-२७)

"वृश्चिकघातेन विषधरोऽपि हतः" (७२ पृष्ठ)

"सुनीतिरिव राज्ञां महाराजशब्दं स्थापयति" (७९ पृष्ठ)

अतिभूमिं गतस्त्रीणामनुरागो हरौ तु यः ।
स एव भक्तिरूपेण पच्यते मोक्षकारणम् ॥ ६ ५२ ॥

---

॥ श्रीरस्तु ॥

# अनुबन्धः ५

## कठिनपद टिप्पणी

महितैः - पूजितैः,
विद्वन् - भगिनीपतिः
संख्यम् - युद्धम्
शुण्डालः - गजः
आजीवः - जीवनम्
नासीरैः - अग्रेसरैः
तीर्थीकृत्य - शास्त्रीकृत्य
शुण्डीरः - समर्थः
मानार्थयोः - प्रमाणप्रमेययोः
पटच्चरम् - जीर्णवस्त्रम्
वर्गधर्माः - अर्थकामाः
ईषणा - इच्छा

अपहतविषयः - दूषितप्रमेयः
निक्षेपविद्या - प्रपत्तिविद्या
निरनुक्रोशैः - निर्दयैः
अहिभयम् - अन्तर्विरोधः
वारी - गजबन्धनी
सपीतिः - सहपानम्
काष्ठा - चरमसीमा
मायाविलसिन्या - अविद्यया
सुनीतिः - प्रच्छन्नपात्रम्
सदूहः - सुविचारः
शंसनं - प्रार्थनम्
उपजापः - अन्तर्भेदः
बहुमानम् - बहुप्रमाणम्
जाल्मः - कुहकः
अरण्यानी - महारण्यम्
मन्त्रमाया - मन्त्रकपटम्
मृगतृष्णा - मरीचिकाजलम्
यथाजातः - अज्ञः
अयथाजातः - यथेष्टजनितः
नरेन्द्रैः - विषवैद्यैः,
आत्तगन्धः - अभिभूतः
तारका - कनीनिका
समये - सिद्धान्ते, काले च
कैशिकं - केशसंहतिः
वैदेशिकं - देशान्तरगतम्
कोट्यन्तरे - विसदृशपक्षे

वर्धकी - सकलपुरुषार्थच्छेदकरी
सद्भिः - प्रामाणिकैः
सुदृशाम् विदुषाम्, योषितां च
खण्डनहेतवः - सम्भोगचिह्नानि च
चन्द्रशाला - शिरोगृहम्
नीवी - मूलधनम्
सन्यासी - विवरणकारः
शुक्लपटः - वाचस्पतिः
नग्नम् - दिगम्बरम्
निर्वाणम् - नग्नत्वम्
द्वैतसिरा - द्वैतस्थापनमार्गः
कन्था — जीर्णं कम्बलम्
लवनम् छेदनम्
कर्तरी - छेदनी
वातूलः - वात्या
रविः - अर्कवृक्षः
संशप्तकः - संग्रामादनिवर्ती
अपार्थः - असमर्थश्च
रामानुजः - कृष्णश्च
सैरिभाः - महिषाः
वितण्डा - परपक्षप्रतिक्षेपः
पौनःपुनी - पौनःपुन्यम्
पारीणाः - पटीयांसः
चिखण्डिषा - खण्डयितुमिच्छा
समितिः - सभा, युद्धं च
मितिः -प्रमितिः

समितिः - विद्वत्सभा, युद्धं च
पदेषु - स्थानेषु
साप्तपदीनम् - सख्यम्
अनुबन्धाः - सहायाः
बन्दीग्राहम् - बन्दीं यथा गृह्णन्ति, तथा
अहीरसाः - सेवकाः
उपाधयः - जपाकुसुमादयः
विश्वमुषोः - विश्वचोरयोः
स्वराट् - अकर्मवश्यः
लब्धासिके - लब्धप्रतिष्ठे, गृहीतखड्गे च
अनासिका - अप्रतिष्ठा, नासिकारहिता च
परां कोटिम् - उन्नतं पदम्
अनुपहितं - उपाधिरहितम्
शिवम् - सर्वमङ्गलगुणास्पदम्
अंशुकम् - किरणम्, वस्त्रं च
सुनीतिः - सामान्यविशेषादिन्यायः
मूलमन्त्रम् - श्रीमदष्टाक्षरम्
क्षेत्रज्ञाः - जीवाः
वर्तनीम् - क्षुद्रमार्गम्
याम्यम् - यमलोकमार्गम्
अर्चिरादिः - अर्चिरादिमार्गः
उल्लोचः - वितानम्
प्रत्यञ्चि - प्रत्यगात्मतत्त्वानि
स्वयंचित् - ज्ञानैकमयः
विपश्चिता - सर्वज्ञेन
अक्षम् - इन्द्रियम्
परिकरः - उपकरणम्
चिरन्तनवचः - वेदः

एवं कठिनपदानामर्थः व्याख्याने प्रतिपाद्यते । तत्र स्थिताः केचन विशेषा उपोद्घाते समुपवर्णिताः । कुत्र कुत्रचित् नाटकलक्षणसमन्वयः, श्लिष्टपदानां विभिन्नार्थ विवरणम्, वेदान्तवाक्यानां तात्पर्यनिर्णयः, तत्र तत्र अभिसन्धीनामुद्घाटनम्, सर्वत्र अवतारिकाप्रदानम्, मूलग्रन्थसमर्थनौपयिकानां विषयाणां क्रोडीकरणम् – इत्यादयो बहवो विशेषाः, सारसंग्रहरूपेऽस्मिन् व्याख्याने विद्योतन्ते । ते सर्वेऽपि निर्मत्सरैः सहृदयैः स्वयमेव अनुभूयन्तात् – इति विस्तरभीत्या विरम्यते

---

